**येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥**

यजत्र यजनीय हे अग्ने दिवि द्युलोके यत् वर्चः आदित्याख्यं यज्ज्योतिस्तत् ते तवैव ज्योतिः । पृथिव्यां आहवनीयादिरूपतया वर्तमानं यत्तेजस्तत्त्वदीयमेव । प्रसिद्धं तेजोऽभिधाय गूढं ज्योतिरभिधत्ते—यदोषधी-ष्वप्सु इति । ओषधीषु अरणिप्रभृतिषु काष्ठेषु यत् तेजः । यद्वा ओषधीषु वनस्पत्यादिषु सोमाख्यं यत्तेजः, अप्सु जलेषु यद्वैद्युताख्यं तेजस्तत्सर्वं आ सर्वत्र वर्तमानं तेजः तावकमेव । किंच येन वायुरूपेण तेजसा अन्तरिक्षं आकाशं उरु आततन्थ आतेनिथ विस्तीर्णं कृतवानसि । त्वेषः दीप्यमानः अत एव भानुः भासमानः नृचक्षाः नृणां साक्षितया द्रष्टा अर्णवः समुद्रवन्महान् । सः तादृशस्त्वमन्तरिक्षमाततनिथेति पूर्वेणान्वयः । उक्तार्थे वाजसनेयश्रुतिः 'अग्ने यत्ते दिवि वर्च इत्यादिरेषा वा अस्य दिवि वर्चः पृथिव्यामिति यदग्निः पृथिव्यां यदो-षधीष्वप्स्विति यदेवैतेष्वोषधिषु यान्यप्सु तान्यस्मि-न्नेतदाह येनान्तरिक्षमुर्वाततन्थेति वायुः स त्वेषः स भानुरर्णवो नृचक्षा इति महानेष भानुरर्णवो नृचक्षा इत्येतत्' ( शब्रा. ७।१।१।२३ ) इति । ऋग्भा.

स्वात्मतया साक्षात्कृतपरमात्मरूपः

**अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।**

**अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥**

साक्षात्कृतपरतत्त्वरूपः अग्निर्वचनेन स्वात्मनः सर्वा-त्मकत्वानुभवमाविष्करोति । हे कुशिकाः । भोक्तृभोग्य-भावेन द्विविधं हीदं सर्वं जगत् । 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः' ( बृउ. १।४।६ ) इति श्रुतेः । तत्र सकलभोक्तृवर्गरूपेणान्नादोऽग्निः । स च अग्निवाय्वादित्यभेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके — 'स त्रेधा-त्मानं व्यभजत । आदित्यं तृतीयं वायुं तृतीयम्' (बृउ. १।२।३ ) इति । तत्र सः अग्निः अहं जन्मना एव जात-वेदाः अस्मि । श्रवणमननादिसाधननिरपेक्षेण स्वभावत एव साक्षात्कृतपरतत्त्वस्वरूपोऽस्मि । घृतं मे चक्षुः । यदेतत् विश्वस्य विभासकं मम स्वभावभूतप्रकाशात्मकं चक्षुस्तद्घृतम् । इदानीमत्यन्तं दीप्तम् । यदेतत् अमृतं कर्मफलं दिव्यादिव्यविविधविषयोपभोगात्मकं तत् मे मम आसन् आस्ये वर्तते । सकलभोक्तृवर्गात्मना स्वस्यैवावस्थानात् । एवं स्वात्मनः पृथिव्यधिष्ठातृरूपतां अभिधाय वाय्वात्मनाऽन्तरिक्षाधिष्ठातृतामाह—अर्कः जगत्स्रष्टा प्राणः । 'सोऽर्चन्नचरत्तस्यार्चत आपोऽजाय-न्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम्' (बृउ. १।२।१ ) इति श्रुतेः । स प्राणोऽहं त्रिधातुः । त्रेधात्मानं विभज्य तत्र वाय्वात्मना रजसः अन्तरिक्षस्य विमानः विमाता अधिष्ठाता अस्मि । तथादित्यरूपेण द्युलोकाधिष्ठातृतामाह अजस्रो घर्म इति । अजस्रोऽ-नुपक्षीणो घर्मः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽ-हमस्मि । एवं भोक्तृरूपमात्मनोऽनुसंधाय भोग्यरूपतामपि अनुसंधत्ते । यत् हविः भोग्यं प्रसिद्धमस्ति तदप्यहमेव अस्मि । यद्वा । अहमग्निरस्मि देवानां हविःप्रापणात् अङ्गनादिगुणयुक्तोऽस्मि । किंच जन्मना उत्पत्त्या जातवेदा जातप्रज्ञोऽस्मि । उत्पत्तिक्षणे एव सर्वज्ञोऽ-स्म्यस्मि । अथवा जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः । सर्वात्मक इत्यर्थः । तत्कथमित्युच्यते । घृतं मे चक्षुः । यदेतद्घृतं प्रसिद्धमस्ति तन्मे चक्षुःस्थानीयम् । यथा लोके चक्षुर्भासकं एवं घृतं मयि प्रक्षिप्तं ज्वाला-मुपादयन्मम भासकम् । अमृतं प्रसार्य यदमृतम-विनाशि ज्योतिर्मे ममासन आस्ये वर्तते । त्रिधातुः प्राणापानव्यानात्मना त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽपि अहमेवास्मि । तथा च रजसोऽन्त-रिक्षस्य विमानो विशेषेण माता परिच्छेत्ता वायुश्चा-हमस्मि । किंच अजस्रो घर्मो नैरन्तर्येण संतापकारी सूर्यश्चाहमस्मि । किं बहुना आज्यपुरोडाशादिरूपं यदे-तद्धविरस्ति तदुपलक्षितं सर्वमप्यहमस्मि । 'सर्वं खल्विदं ब्रह्म' ( छाउ. ३।१४।१) इति श्रुतेः । नाम ॥ प्रसिद्धौ । तदनेनाग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्व-मुक्तं भवति । ऋग्भा.

(१) ऋसं. ३।२६।७; सासं. १।६।३ उत्तरार्धे (त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम् ); भैसं. ४।१२।५ ( १३२ ); शुसं. १८।६६; नि. १४।२.

**[१]त्रिभिः पवित्रैरपुपोद्ध्यर्कं हृदा मतिं ज्योतिरनु प्रजानन्।**
**वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत्॥**

सर्वात्मकः अग्निः हृदा अन्तःकरणवृत्त्या मतिं मननीयं ज्योतिः स्वप्रकाशरूपं परब्रह्मरूपं तेजः अनु प्रजानन् श्रवणमननादिक्रमेण प्रकर्षेण सदा सर्वविपर्यास भावनाबुद्धिनिरसनेन स्वात्मरूपतया जानानः सन् पवित्रैः पावनैः त्रिभिः अग्निवायुसूर्यैः अर्कं अर्चनीयं स्वात्मानं अपुपोत् हि तेष्वपि निर्मलतया पावनं परिच्छेदं खलु। यथा दशापवित्रेण सोमं शोधयन्ति तद्वत्। एवं जानानोऽग्निः वर्षिष्ठं स्वात्मानमत्तमं स्वधाभिः, स्वतेजोभिः रत्नं रमणीयं अकृत अकार्षीत्। आदित् अनन्तरमेव आत्मनि ज्ञातं मति द्यावापृथिवी एव परितः द्यावापृथिव्यौ तदुपलक्षितं सर्वं जगत् पर्यपश्यत्। परितः सर्वतः स्वात्मतया अद्राक्षीत्। 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतेः। ऋस्मा.

**शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम्।**
**मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम्॥**

यस्मादुपास्यायाद्विश्वामित्रो वेदानगम्यं परं ब्रह्म जानीतिममुपास्यायगतं सर्वा स्तौति। हे रोदसी द्यावापृथिव्यौ शतधारं अपरिमितजलधारायुक्तं अक्षीयमाणं न कदापि विच्छिन्नप्रवाहं, उत्सम्। लुप्तोपममेतत्। उत्समिव सततप्रवाहोपेतं स्रोतं इवाविच्छिन्नवाक्सरणी समेतं विपश्चितं मेधाविनं सकलशास्त्राभिज्ञं पितरं शिष्याणां विद्योपदेशेन पालकं वक्त्वानां वक्तव्यानां वेदवाक्यानां मेळिं मेळकं नानाशास्त्रागतानां वाक्यानां मेळकं समन्वयकं सकलस्य वक्तारं पित्रोः द्यावापृथिव्योः उपस्थे समीपे मदन्तं ज्ञानातिशयेन हृष्यन्तं अत एव सत्यवाचं अज्ञातार्थाभावात्परप्रतारणे च कारणाभावात् सत्यवादिनम्। तं इममुपास्याय पिपृतं अपेक्षितफलप्रदानेन सम्पूर्णं कुरुतम्। यद्वा पालयतम्। ऋस्मा.

(१) ऋसं. ३।२६।८, ९.

मनुष्यैः सर्वदा स्तोतव्यः

**[१]अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु।**
**दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः॥**

जातवेदाः सर्वविषयज्ञानवानयमग्निः अरण्योर्निहितः देवैर्यजमानैश्च निहितः स्थापितोऽस्ति। अत्र दृष्टान्तः। गर्भ इव इति। यथा गर्भः गर्भिणीषु स्त्रीषु सुधितः सुष्ठु निहितो वर्तते तद्वत्। स तादृशः अग्निः दिवसादिः समुत्पन्नः एव जागृवद्भिः कर्माणि साधयद्भिः मनुष्येभिः मनुष्यैरस्माभिः दिवेदिवे प्रत्यहं स्तुत्यः उपासनीयः स्तुतिरूपाभिर्गीर्भिः स्तोतव्यः। ऋस्मा.

मर्त्येष्वाविष्टो महो देवः

**[२]चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश॥**

यद्यपि सक्तस्याग्निसूर्यादिपक्षेऽपि तात्पर्यात् पञ्चभाव मन्त्रो व्याख्येयस्तथापि निरुक्तायुक्तत्वात् पञ्चात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते। अस्य यज्ञात्मकस्याग्नेः चत्वारि शृङ्गा चत्वारो वेदाः शृङ्गस्थानीयाः। यद्यपि आपस्तम्बेन 'यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते' (परिभा. १।३) इत्युक्तं तथाप्याथर्वणस्य इतरानपेक्ष्यैव एकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारि शृङ्गेत्युक्तम्। त्रयो अस्य पादाः सवनानि त्रीण्यस्य पादाः। प्रवृत्तिसाधनत्वात्पादा इत्युच्यन्ते। द्वे शीर्षे ब्रह्मोदनं प्रवर्ग्यश्च। इतिसोमप्राधान्ये नेदमुक्तम्। सप्त हस्तासः सप्त छन्दांसि। हस्ताः अनुष्ठानस्य मुख्यसाधनम्। छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तत्वेनोक्ताः। त्रिधा बद्धः मन्त्रब्राह्मण

(१) ऋसं. ३।२९।२, सासं. १।१।८ गर्भ इव सुधितो गर्भिणीषु (गर्भ इवेत्सुभृतो गर्भिणीभिः); कौउ. २।४।८

(२) ऋसं. ४।५८।३; कासं. ४०।७ (४८); मैसं. १।६।२ (७८) त्रिधा (त्रेधा) मर्त्याँ आ विवेश (मर्त्यं आततान); शुसं. १७।९१; गोब्रा. १।२।१६; तैआ. १०।१०।२; नि. १३।७।१.

कल्पैः त्रिप्रकारं बद्धः । बन्धनमस्य तन्निष्पाद्यम् । वृषभः फलानां वर्षिता रोरवीति भृशं शब्दायते । ऋग्यजुःसामाख्यैः शस्त्रयागस्तुतिरूपैर्गायत्र्यादिभिर्वा निभिरस्मै रौति । एष महो देवः मर्त्यान् आ विवेश । स यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्यते । अत्र यास्कः— 'चत्वारि शृङ्गेति वेदा वा एत उक्ताः' ( नि. १३।७ ) इत्यादिना निरवोचत । तदत्रानुसंधेयम् । अथ सूर्यपक्षे व्याख्यायते अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः । एताः श्रयणार्थत्वात् शृङ्गाणीत्युपचर्यन्ते । त्रयो अस्य पादाः । त्रयो वेदाः पादस्थानीयाः भवन्ति गमनसाधनत्वात् । तथा हि 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्यः' ( तैब्रा. ३।१२।९।१ ) इति हि वेदत्रयेण गतिराम्नाता । द्वे शीर्षे । अहश्च रात्रिश्चेति द्वे शिरसी । सप्त हस्तासो अस्य । सप्त रश्मयः षड् विलक्षणा ऋतवः एकः साधारण इति वा सप्त हस्ता भवन्ति । त्रिधा बद्धः त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन स्थितः । ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रेधा बद्धो वा । वृषभो वर्षिता रोरवीति शब्दं करोति वृष्ट्यादिद्वारा । स महो महान् देवो मर्त्यान् आ विवेश तन्नियन्तृतया । 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋस. १।११५।१ ) इति हि श्रुतम् । एवं त्वष्ट्रादिपक्षेऽपि योज्यम् । शाब्दिकास्तु शब्दब्रह्मपरतया 'चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च' इत्यादिना व्याचक्षते । अपरे त्वपरथा । तत्सर्वमत्र द्रष्टव्यम् । ऋस्मा.

[ चत्वारि शृङ्गा इति वेदा वा एत उक्ताः । त्रयो अस्य पादा इति त्रीणि सवनानि । द्वे शीर्षे इति प्रायणीयोदयनीये । सप्त हस्तास इति सप्त छन्दांसि । तस्मात्सप्तार्चिषः सप्त समिधः सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त । त्रिधा बद्ध इति त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः । ऋषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिरथर्वभिः । यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति अथर्वभिर्जपन्ति । महो देव इति महादेवो मर्त्यां आविवेश मनुष्याणां तस्योत्तरा भूयसे निर्वचनाय ॥

चत्वारि शृङ्गा चतुर्मुखाश्चतुर्वेदाश्चतुर्युगा आश्रयाश्चत्वारोऽभवन् । स्वयं कैलासपर्वतो नाम एको भवति तदेकशृङ्ग द्विशृङ्ग दशशृङ्ग द्वादशशृङ्ग विंशशृङ्ग द्वाविंशशृङ्ग त्रिंशशृङ्ग द्वात्रिंशशृङ्ग शतशृङ्ग सहस्रशृङ्ग कोटिशृङ्ग अनन्तशृङ्ग मेरुशृङ्ग स्फाटिकशृङ्ग पितृशृङ्ग मनुष्यशृङ्ग द्वादशादित्यानां पूर्वापार मुनयो वदन्ति । सर्वमायुः सर्वमेत्यायुः सर्वमेति य एवं वेद ॥

कब्रा. २ ( पृ. २५–२७ )

चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयो अस्य पादा इति सवनान्येव । द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्यावेव । सप्त हस्तासो अस्येति छन्दांस्येव । त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम् । वृषभो रोरवीत्येष ह वै वृषभ एष तद्रोरवीति यद्यज्ञेषु शस्त्राणि शंसति ऋग्भिर्यजुर्भिः सामभिर्ब्रह्मभिरिति । महो देवो मर्त्या आविवेशेत्येष ह वै महान् देवो यद्यज्ञ एष ह मर्त्या आविवेश । गोब्रा. १।२।१६ ]

सर्वदेवमयः

त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः ।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥

हे अग्ने त्वं वरुणः तमसा वारको रात्र्यभिमानी देवोऽपि त्वमेव यत् यदा जायसे । किं च त्वं मित्रः अहरभिमानी देवः प्रमीतेस्त्राता यत् यदा समिद्धः । त्वमुत्पन्नमात्रः सन् तमो निवारयसि प्रवृद्धः सन् हितकारी भवसीत्यर्थः । त्वे त्वयि विश्वे सर्वेऽपि देवाः वर्तन्ते । त्वद्दत्तेन हविषा तेषां जीवनात् । 'तं देवा विश्वतोऽभि प्राविशन्' ( तैस. ६।२।८।६ ) इति हि श्रुतेः । हे सहसस्पुत्र बलेन मथ्यमानत्वात् । किं च त्वम् इन्द्रः स्वामी दाशुषे हविर्दात्रे मर्त्याय यजमानाय । ऋस्मा.

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि ।
अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि ॥

हे अग्ने त्वमर्यमा भवसि । सर्वेषां नियमिताऽसि । यत् यदा कनीनां कन्यकानां संबन्ध्यसि । किं च हे स्वधावन् हविर्लक्षणान्नवन् गुह्यं गोपनीयं

(१) ऋसं. ५।३।१, ऐब्रा. २९।१०।१८.
(२) ऋसं. ५।३।२–५.

बिभर्षि. वैश्वानर इति तन्नाम । सुधितं सुष्ठु निहित मित्र न मित्रमिव त्वां गोभिः । विकारे प्रकृतिशब्दः । गोविकारैः क्षीरादिभिः अञ्जन्ति । यत् यस्मात् दम्पती जायापती समनसा समानमनस्कौ कृणोषि करोषि ।

ऋभा.

तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् ।
पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ॥

अनयाऽग्निर्मारुतोऽग्निर्वा स्तूयते । हे अग्ने तव श्रिये श्रयणाय मरुतः अतः अन्तरिक्षगाः मर्जयन्त मार्जयन्ति । हे रुद्र वृद्धया प्रवृद्धधितरग्ने ते तव यत् जनिम जन्म वैद्युतलक्षणं चारु चरणीयं चित्रं चायनीयं च । तत्कथमिति चेदुच्यते । विष्णोः व्यापनशीलस्य देवस्य उपमं गुह्यं अगम्यं यत् पदं निधायि । अनेनान्तरिक्षमुक्तम् । उपमेयमिव विष्णोर्मध्यमं पदं तस्मादन्तरिक्षं पश्यन्ति इति ब्राह्मणम् । तेन गोना उदकानां गुह्यं नाम नामानि पासि रक्षसि ।

ऋभा.

तव श्रिया सुदृशो देव देवाः पुरू दधाना अमृतं सपन्त ।
होतारमग्निं मनुषो नि षेदुर्दशस्यन्त उशिजः शंसमायोः ॥

हे देव अग्ने सुदृशः तव श्रिया समृद्धया देवाः इन्द्रादयः पुरु अत्यधिकं दधानाः त्वयि प्रीतिं धारयन्तः अमृतं सपन्त स्पृशन्ति । होतारं देवानामाह्वातारं अग्निं मनुषः मनुष्याः नि षेदुः परिचरन्ति ऋत्विजः । किं कुर्वन्तः । दशस्यन्तः हविर्वितरन्तः शंसं पत्रे उशिजः कामयमानस्य आयोः मनुष्यस्य यजमानस्यार्थम् ।

ऋभा.

न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः ।
विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान् ॥

हे अग्ने त्वत् त्वत्तोऽन्यः न अस्ति होता पूर्वः पुरुषः सत्यतमो वा यजीयान् यष्टा वा । काव्यैः स्तोत्रैः स्तुत्यः परः परस्तात् परस्मिन्नपि काले न अस्ति । हे देव हे स्वधावः अन्नवन् यस्याः विशः प्रजायाः ऋत्विग्रूपायाः अतिथिः भवासि अतिथिवत्पूज्यः भवसि । सः यज्ञेन मर्तान् अस्मद्द्वेष्टॄन् वनवत् वृश्चति हिनस्ति । यद्वा । मर्तान् परिचारकान् वनवत् सम्भजेत ।

ऋभा.

विश्वसृक् विश्वज्योतिश्च

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।
तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥

वैश्वानरस्य विश्वनरहितस्याग्नेः चक्षसा तेजसा अमृतस्य उदकस्य केतुना प्रज्ञापकेन दिवः द्युलोकस्य सानूनि समुच्छ्रितस्थलानि नक्षत्ररूपाणि विमितानि निर्मितानि । यद्वा । दिवादेरन्तरिक्षस्य सानूनि समुच्छ्रितप्रदेशा मेघा मया विमितानि निर्मिताः । धर्मविकारत्वात्तेषाम् । तस्येदु तस्यैव वैश्वानरस्य मूर्धनि मूर्धस्थानीय उपरि वर्तमाने धर्मे सर्वात्मना परिणते विश्वा विश्वानि व्याप्तानि भुवना भुवनान्युदकानि अधि वर्तन्ते । यद्वा । वैश्वानरात्मकस्य परब्रह्मणो मूर्धन्युपरिप्रदेशे सर्वाणि भूतजातान्यधिवसन्ति । तथा वयाः शाखाः इव सप्त सप्तसंख्याः सर्पणशीलाः वा विस्रुहः नद्यश्च गङ्गाद्याः रुरुहुः रोहन्ति । अस्मादेव वैश्वानरात् प्रादुर्भवन्ति । आहुतिद्वारा सकलं जगदग्निः सकाशादुत्पद्यत इत्यर्थः ।

ऋभा.

वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः ।
परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता ॥

सुक्रतुः सुकर्मा वैश्वानरः विश्वेषां नराणां हितः यः अग्निः रजांसि उदकानि लोकान् वा वि अमिमीत निर्मितवान् । तथा दिवः द्युलोकस्य सम्बन्धीनि रोचना रोचमानानि दीप्यमानानि नक्षत्रादीनि कविः क्रान्तदर्शी सन् सार्चिभिः वि अमिमीत । यः च विश्वा सर्वाणि भुवनानि भूतजातानि व्याप्तान्युदकानि वा परि पप्रथे परितोऽप्रथयत सोऽदब्धः अदब्धः केनाप्यहिंसितः गोपाः सर्वस्य गोपायिता रक्षिता अमृतस्य अमरणहेतोरुदकस्य रक्षिता पालयिता सन् वर्तत इति शेषः ।

ऋभा.

(१) ऋसं. ६।७।६. (२) ऋसं. ६।७।७.

तादृशम् । छान्दसो लिङ्गव्यत्ययः । मे मदीयं मनः च वि चरति विविधं प्रवर्तते । एवमहमहमिकया सर्वेष्विन्द्रियेषु प्रवृत्तेषु किंस्विद् अहं वैश्वानरस्य रूपमिति वक्ष्यामि । किमु नु किमु खलु सम्प्रति मनिष्ये मनसा प्रपश्ये । वैश्वानरस्य गुणानामनन्तत्वात् मन्दप्रज्ञेन मया ज्ञातुं न शक्यत इत्यर्थः । ऋभा.

सर्वदेवनमस्योऽप्रमेयश्च

[1]विश्वे देवा अनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसम् ।
वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥

हे वैश्वानर तमसि अन्धकारे तस्थिवांसं स्थितवन्तं त्वां विश्वे सर्वे देवाः अनमस्यन् नमस्कुर्वाणाः । कुतो हेतोः । भियानाः अन्धकाराद् भीताः । तादृशः अमर्त्यः मरणरहितः वैश्वानरः अग्निः नः अस्मान् ऊतये ऊत्या रक्षणेन अवतु रक्षतु । पुनरुक्तिरादरार्था । ऋभा.

सर्वज्ञ.

[2]आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म ॥

दैव्यानि देवेषु भवानि व्रता व्रतानि कर्माणि चिकित्वान् आ समन्तात् जानन् । तथा मानुषस्य जनस्य मनुष्यजातस्य जन्म उत्पत्तिरूपं कर्म चिकित्वान् (आ) आभिमुख्येन जानन् ।

ऋभा.

[3]एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्तांश्च विद्वान् ॥

हे चिकित्वः । 'चिकित् चाश्चानायान' (नि. ३।१९) इति यास्कः । हे चेतनावन् सर्वज्ञाग्ने त्वं देवानां इन्द्रादीनां जन्म जन्मानि मर्तान् मनुष्यान् च विद्वान् जानन् एता एतानि भूम सम्यक्पर्यवस्थितानि भूतजातानि नि पाहि नितरां पालय । यतस्त्वं देवमनुष्यादीन् सर्वान् जानासि अत एवमुच्यते इत्यर्थः । ऋभा.

[4]विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः ।
अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकम् ॥

विष्णुः व्यापनः गोपाः सर्वस्य गोपायिता प्रिया प्रियतमानि अमृता क्षयरहितानि धामानि तेजांसि दधानः सोऽग्निः परमं पाथः स्थानं पाति रक्षति । यद्वा । धामानि लोकधारकाणि अमृता उदकानि दधानः सन् परमं पाथः उदकस्य स्थानमन्तरिक्षं पाति । सः अग्निः ता तानि विश्वा सर्वाणि भुवनानि भूतजातानि वेद जानाति । ऋभा.

[1]स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते ।
विद्वाँ आरोधनं दिवः ॥

सः अग्निः होता देवानामाह्वाता भवति । सेदु स एवाग्निः दूत्यं देवानां दूतकर्म चिकित्वान् जानन् दिवः स्वर्गस्य आरोधनं आरोहणं आरोहणात् देवानां स्थानं च विद्वान् जानन् अन्तः द्यावापृथिव्योर्मध्ये ईयते गच्छति । ऋभा.

[2]अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।
देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥

होता देवानामाह्वाता राजा राजमानः सः अग्निः गृहपतिः गृहाणां पतिरधिपतिर्भवति । तथा विश्वा विश्वानि सर्वाणि जनिमा जन्मानि जन्मवन्ति भूतजातानि जातवेदाः जातप्रज्ञः सन् वेद वेत्ति जानाति । यः अग्निः देवानां इन्द्रादीनां उत अपि च मर्त्यानां मनुष्याणां च मध्ये यजिष्ठः अतिशयेन यष्टा भवति । ऋतावा, ऋतं सत्यं यज्ञो वा, तद्वान् सः अग्निः प्र यजतां प्रकर्षेण देवान् यजतु । ऋभा.

पापानां हन्ता

[3]न्यक्रतून् ग्रथिनो मृध्रवाचः पणीँरश्रद्धाँ अवृधाँ अयज्ञान् ।
प्रप्र तान्दस्यूँरग्निर्विवाय पूर्वश्चकारापराँ अयज्यून् ॥

(१) ऋसं. ६।९।७. (२) ऋसं. १।७०।२.
(३) ऋसं. १।७०।६. (४) ऋसं. ३।५५।१०.

(१) ऋसं. ४।८।४; कासं. १२।१५ (५३).
(२) ऋसं. ६।१५।१३; मसं. ८।१२।१० (२७); गृब्रा. १।७।१।४, ८, २।३।१४; शाब्रा. २३।४; तब्रा. ३।५।१२।१. (३) ऋसं. ७।६।३.

अक्रतून् अयज्ञान् ग्रथिनः जल्पकान् मृध्रवाचः हिंसितवचस्कान् पणीन् पणिनामकान् वार्धुषिकान् अश्रद्धान् यज्ञादिषु श्रद्धारहितान् अवृधान् स्तुतिभिरग्निमवर्धयतः अयज्ञान् यज्ञहीनान् तान् दस्यून् वृथा कालस्य नेतॄन् अग्निः प्रप्र अत्यन्तं नि विवाय नितरां गमयेत्। तदेवाह। अग्निः पूर्वः मुख्यः सन् अयज्यून् अयजमानान् अपरान् जघन्यान् चकार। ऋभा.

उपासकस्य तद्भावविपर्योऽद्वैतरूपेण

यदग्ने मर्त्यस्त्वं स्यामहं मित्रमहो अमर्त्यः । सहसः सूनवाहुत ॥

हे सहसः सूनो बलस्य पुत्र आहुत घृतैराहुत हे मित्रमहः अनुकूलदीप्तिमन् अग्ने मर्त्यः मरणधर्मा अहं यत् यदि त्वं स्याम् त्वदुपासनया तद्रूपमापन्नो भवेयम्। 'यं यथायथोपासते तदेव भवन्ति' इति श्रुतेः। तर्हि त्वं अमर्त्यः मरणरहितो देव एव भवेयमिति। ऋभा.

देवभक्तसंबन्धः

न त्वा रासीयाभिशस्तये वसो न पापत्वाय सन्त्य । न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया ॥

हे वसो वासक त्वा त्वा अभिशस्तये अभिशसनाय मिथ्यापवादाय हिंसायै वा न रासीय नाक्रोशयेयम्। हे सन्त्य सम्भजनीयाग्ने पापत्वाय त्वां न रासीय। मे मदीयः स्तोता चानभिमतवचनेन त्वां न आक्रोशयतु। अत एव अमतीवा, अमतिरशोभना बुद्धिः, तद्वान्। अपि च दुर्हितः शत्रुः हे अग्ने अस्माकं न स्यात् न भवतु। अत एव पापया अशोभनया बुद्ध्या सः न आभवतु। ऋभा.

त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः । त्वां वर्धन्तु नो गिरः ॥

हे अग्ने त्वां मनीषिणः मनस ईशाः स्तोतारः स्तुतिभिः स्तुवन्तीति शेषः। किञ्च त्वा एव चित्तिभिः कर्मभिः हिन्वन्ति प्रीणयन्ति। नः अस्माकं गिरः स्तुतयः त्वां एव वर्धन्तु वर्धयन्तु। ऋभा.

अदब्धस्य स्वधावतो दूतस्य रेभतः सदा । अग्नेः सख्यं वृणीमहे ॥

हे अग्ने अदब्धस्य केनाप्यहिंसितस्य स्वधावतः बलवतः दूतस्य देवानां रेभतः देवान् स्तुवतः तव सख्यं सदा वयं वृणीमहे। ऋभा.

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥

शुचिव्रततमः अतिशयेन शुद्धकर्मा शुचिः शुद्ध एव विप्रः मेधावी शुचिः शुद्धः सन्नेव कविः क्रान्तकर्मा शुचिः एव आहुतः अग्निः रोचते प्रकाशते। ऋभा.

उत त्वा धीतयो मम गिरो वर्धन्तु विश्वहा । अग्ने सख्यस्य बोधि नः ॥

उत अपि च हे अग्ने त्वा त्वां मम धीतयः कर्माणि गिरः स्तुतयश्च विश्वहा सर्वदा वर्धन्तु वर्धयन्तु। नः अस्माकं सख्यस्य सख्यं सखित्वं स्तुत्यादिकं बोधि बुध्यस्व। ऋभा.

यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम् । स्युष्टे सत्या इहाशिषः ॥

हे अग्ने त्वं यदि अहं त्वं बहुधनः स्यां भवेयं त्वं वा घ त्वं वा अहं अहं दरिद्रः स्तोता स्याः भवेः तर्हि स्युः ते आशिषः आशासनानि इह अस्माभिरुक्ताः सत्याः सत्यानि स्युः भवेयुः। ऋभा.

वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥

हे अग्ने त्वं विभावसुः दीप्तिधनः वसुपतिः धनपतिः वसुः वासयिता च असि भवसि हि यस्मादतो वयं अपि ते तव सुमतौ अनुग्रहबुद्धौ स्याम भवेम। ऋभा.

(१) ऋसं. ८।१९।२५.

(२) ऋसं. ८।१९।२६.

(३) ऋसं. ८।४४।१९; कासं. ४०।१४ (१३३.).

(१) ऋसं. ८।४४।२०; कासं. ४०।१४ (१३४).

(२) ऋसं. ८।४४।२१; तैसं. १।३।१४।८, १।५।५।३. कासं. ४०।१४ (१३५) शुचिः कविः (शुचिर्विप्रः); मैसं. १।५।१ (१३) रोचत (रोचते); ऐब्रा. ३२।७।३; शब्रा. १२।४।४।५.

(३) ऋसं. ८।४४।२२.

(४) ऋसं. ८।४४।२३.

(५) ऋसं. ८।४४।२४; तैसं. १।४।४६।१.

अग्ने घृतव्रताय ते समुद्रायेव सिन्धवः ।
गिरो वाश्रास ईरते ॥

हे अग्ने घृतव्रताय दीप्तकर्मणे ते तुभ्यं वाश्रासः शब्दनशीलाः गिरः मम स्तुतयः सिन्धवः नद्यः समुद्राय यथा समुद्राय तथा ईरते प्रवर्तन्ते । ऋसा.

युवानं विश्पतिं कविं विश्वादं पुरुवेपसम् ।
अग्निं शुम्भामि मन्मभिः ॥

युवानं नित्यतरुणं विश्पतिं विशां पतिं कविं क्रान्तकर्माणं विश्वादं सर्वस्य भक्षयितारं पुरुवेपसं बहुकर्माणम् । 'वेपः' इति कर्मनामसु पाठात् । अग्निं मन्मभिः मननीयैः स्तोत्रैः शुम्भामि अलंकरोमि । ऋसा.

विभु, सर्वोत्तम, व्यापक, अमृतश्च

सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।
विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥

हे अग्ने जागृवद्भिः जागरणशीलैः ऋत्विग्भिः जरमाणः स्तूयमानः दमूनाः दममना दानमना दान्तमना वा इळः इळायाः पदे स्थाने उत्तरवेद्याम् इषयन् अन्नमिच्छन् विश्वस्य सर्वस्य हविषः होता वरेण्यः वरणीयः विभुः व्याप्तः विभावा दीप्तिमान् सुषखा शोभनसखा सखीयते सखित्वमिच्छते यजमानाय स इध्यते । सम्यग्दीप्यते । ऋसा.

स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव ।
जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्यो विशंविशम् ॥

दर्शतश्रीः दर्शनीयदीप्तिः अतिथिः सततगन्ता सः अग्निः गृहेगृहे यजमानानां गृहे वनेवने सोऽपि वनेषु च शिश्रिये श्रितवान् । किंच जन्यः जनेभ्यो हितः सोऽग्निः जनंजनं सर्वं जनं तक्ववीरिव गच्छन्निव नाति मन्यते न तिरस्करोति गच्छत्येव । [illegible] दर्शयति । विश्यः विड्भ्यो हितः सोऽग्निः विशो मनुष्यान् आ क्षेति अभिगच्छति । किंच विशंविशं सर्वा विशः प्रजाः अभितिष्ठतीति शेषः । ऋसा.

सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित् ।
वसुर्वसूनां क्षयसि त्वमेक इद् द्यावा च यानि पृथिवी च पुष्यतः ॥

हे अग्ने त्वं दक्षैः बलैः सुदक्षः सुबलः असि भवसि । किंच क्रतुना कर्मणा सुक्रतुः शोभनकर्माऽसि । किंच काव्येन सर्वार्थविषयेण कर्मणा कविः मेधावी असि । किंच विश्ववित् सर्वज्ञोऽसि । किंच वसूनां धनानां वसुः वासयिताऽसि । किंच हे अग्ने त्वमेक इत् एक एव क्षयसि निवससि । किंच द्यावा च पृथिवी च द्यावा भूमी यानि वसूनि पुष्यतः सवर्धयतः तेषां दिव्यानां पार्थिवानां च धनानामीशिषे इत्यर्थः । ऋसा.

यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा हविष्कृति ।
तस्य होता भवसि यासि दूत्यमुप ब्रूषे यजस्यध्वरीयसि ॥

हे अग्ने अमृताय मरणधर्मरहिताय तुभ्यं यः मर्त्यः मनुष्यः समिधा समिधम् । तृतीयायाः 'सुपां सुलुक्०' इत्याकारः । दाशत् ददाति प्रयच्छति उत वा अपि वा हविष्कृति, हविषा कृतं करणं यस्मिन् स हविष्कृत् । तस्मिन् यज्ञे हवींषि ददातीति शेषः । तस्य मनुष्यस्य होता देवानामाह्वाता भवसि । किंच त्वं दूत्यं दूतकर्म प्रति तत्कर्म कर्तुं यासि गच्छसि । किंच त्वं ब्रह्मा भूत्वाऽस्मिन् कर्मणि [illegible] हवींषि यजमानेन प्रोक्तानीति उप ब्रूषे उपक्रम्य ब्रवीषि । किंच त्वं यजसि यजमानार्थं देवेभ्यो हवींषि ददासि । किंच त्वं तथा पूर्वोक्तप्रकारेण अध्वरीयसि अध्वर्युत्वमाचरसि । अथवाऽध्वरं यज्ञं कर्तुमिच्छसि । ऋसा.

(१) ऋसं. ८।४४।२५.
(२) ऋसं. ८।४४।२६. (३) ऋसं. १०।९१।१.
(४) ऋसं. १०।९१।२.

(१) ऋसं. १०।९१।३.
(२) ऋसं. १०।९१।११.

ततस्तेषां पर्वतानां मध्य एकैकस्मात्पर्वतान्मुष्टिना पांसूनाददे। आदायैवमुवाच—हे भरद्वाज, एते त्रयः पर्वता वेदा एव। तत्रैकैकः पांसुरेको वेदः तस्मादनन्ता वेदास्तेषां मध्ये त्वं एतैस्त्रिभिरायुर्भिरेतन्मुष्टित्रयपरिमितं वेदजातं गुरूपदेशमन्वधीतवानसि। अथानन्तरं तव इतरद्वेदजातमनधीतमेव। तस्मात्सर्ववेदाध्ययनमशक्यमेव। यदि सर्वाध्ययनफलमपेक्षितं तर्हि आगच्छ इमं सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु। अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्येत्येवं बोधयित्वा तस्मै भरद्वाजायैतं सावित्रमग्निं पूर्वोक्तप्रकारेणोवाच। ततः स भरद्वाजः तं सावित्रमग्निं ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयममृतो देवो भूत्वा वर्तमानदेहादूर्ध्वं स्वर्गं प्राप्य तत्रादित्यसायुज्यं प्राप्तवान्। तैब्रासा.

**अमृतो हैव भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद। एषो एव त्रयी विद्या। यावन्तꣳ ह वै त्रय्या विद्यया लोकं जयति। तावन्तं लोकं जयति। य एवं वेद॥**

इत्थमुपाख्यानेन विद्यामहिमानं दर्शयित्वा भरद्वाजवदन्यस्यापि वेदितुस्तत्फलं दर्शयति—अमृतो हैवेति। इतोऽधिकस्य फलस्य शङ्कां वेदत्रयेऽपि वारयितुमाह—एषो एवेति। येयं सावित्राग्निविद्या, एषैव वेदत्रयीविद्यासमाना। वेदत्रयोक्तसर्वकर्मानुष्ठानेन यावत्फलं तावदेतेन सावित्रज्ञानेनैव प्राप्यते। न ह्यादित्योपाधिकहिरण्यगर्भप्राप्तेरधिकं फलं कर्मकाण्डे किंचित्संभवति।

तैब्रासा.

**अग्नेर्वा एतानि नामधेयानि। अग्नेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। वायोर्वा एतानि नामधेयानि। वायोरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। इन्द्रस्य वा एतानि नामधेयानि। इन्द्रस्यैव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। बृहस्पतेर्वा एतानि नामधेयानि। बृहस्पतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। प्रजापतेर्वा एतानि नामधेयानि। प्रजापतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद॥**

अथ सावित्रस्याग्नेः सर्वदेवतात्मकत्वेन सर्वदेवप्राप्तिलक्षणं फलं प्रत्येकमुदाहृत्य प्रदर्शयति। य एतेऽग्निवाय्विन्द्रबृहस्पतिप्रजापतिब्रह्माणो देवाः। प्रजापतिः सत्यलोकवासी चतुर्मुखः। ब्रह्माण्डदेहाभिमानी विराट्पुरुषो ब्रह्मा। सावित्राग्निः सर्वदेवतात्मकत्वात्तेषामग्न्यादीनां देवानां मध्ये यो यो देवः स्वस्यापेक्षितस्तस्य तस्यैव देवस्यैतानि संज्ञानादीनि नामधेयानि। अतस्तत्तद्देवतानामत्वेन ध्याने सति तत्तद्देवतासायुज्यप्राप्तिर्भवति। तस्माद्वेदत्रये यत्फलं तत्सर्वमत्र लभ्यत इत्युपपन्नम्।

तैब्रासा.

**स वा एषोऽग्निरपक्षपुच्छो वायुरेव। तस्याग्निर्मुखम्। असावादित्यः शिरः। स यदेते देवते अन्तरेण। तत्सर्वꣳ सीव्यति। तस्मात्सावित्रः॥**

अथ सावित्रनामव्युत्पादनेन प्रशंसति—योऽयमग्निर्भूमौ चीयते तस्येष्टकानिर्मितं पक्षपुच्छादिकं विद्यते। यस्तु मनसैव ज्ञायमानोऽग्निः स तु वायुस्वरूप एव, न तस्य पक्षपुच्छादिकमस्ति। किन्तु तस्य वायुरूपस्य प्रसिद्धोऽग्निर्मुखत्वेन ध्येयः। असावादित्यः शिरोरूपेण ध्येयः। यदन्यदेवताजातमस्ति तत्सर्वं एते देवते अन्तरेणैतयोरग्न्यादित्ययोर्मध्ये स वायुः सीव्यति सूच्या वस्त्रमिव संयोजयित्वा विच्छिन्नमेकीकरोति। यस्मात्सीव्यति तस्मादयं वायुरूपोऽग्निः सावित्र इत्युच्यते। तदेवं सावित्राग्निविद्या समापिता। तैब्रासा.

चित्याग्निश्छन्दोदेवतात्मकविराट्पुरुषः

**तदाहुः। किं छन्दः का देवताऽग्नेः शिर इति। गायत्री छन्दोऽग्निर्देवता शिरः॥ १॥**

एवं चित्याग्नेश्चक्षुरादिसप्तावयवानां छन्दोमयत्वमुक्तम्। अथ शिरोग्रीवादीनां छन्दोमयत्वं वेदवादिप्रश्नोत्तराभ्यां निरूपयति—तदाहुः किं छन्दः का देवताऽग्नेः शिर इतीति। अग्नेः चित्यस्य शिर इति यदस्ति तस्य किं छन्दः का देवतेति प्रश्नः। उत्तरम्—गायत्री छन्दोऽग्निर्देवता 'अग्निर्मूर्धा दिवः ककुत्' (शुसं. १५।२०) इत्यस्य छन्दस्येष्टकोपधानमन्त्रस्य गायत्रत्वादाग्नेयत्वाच्च (शब्रा. ७।४।१।४१) शिरसस्तदुभयात्मकत्वम्। अन्यत्र

(१) शब्रा. १०।३।२।१-१३.

'गायत्रं हि शिरः' (शब्रा. ८।६।२।६) इति श्रूयते । एवं ग्रीवानूकपक्षादिषु तत्तच्छन्दोमयत्वं तत्तद्देवतामयत्वं च यथायोग्यं मन्तव्यम् । शब्रासा.

**किं छन्दः का देवता ग्रीवा इति । उष्णिक्छन्दः सविता देवता ग्रीवाः ॥**

**किं छन्दः का देवताऽनूकमिति । बृहती छन्दो बृहस्पतिर्देवताऽनूकम् ॥**

**किं छन्दः का देवता पक्षाविति । बृहद्रथन्तरं छन्दो द्यावापृथिवी देवते पक्षौ ॥**

**किं छन्दः का देवता मध्यमिति । त्रिष्टुप्छन्द इन्द्रो देवता मध्यम् ॥**

**किं छन्दः का देवता श्रोणी इति । जगती छन्द आदित्यो देवता श्रोणी ॥**

**किं छन्दः का देवता यस्मादिदं प्राणाद्रेतः सिच्यत इति । अतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ २-७ ॥**

अनूकमङ्गस्य पश्चाद्भागे मेरुदण्डसंधिः पुच्छस्य पक्षयोश्च संधिरित्यर्थः । शब्रासा.

**किं छन्दः का देवता योऽयमवाङ् प्राण इति । यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥**

**किं छन्दः का देवतोरू इति । अनुष्टुप् छन्दो विश्वे देवा देवतोरू ॥ ८-९ ॥**

यज्ञायज्ञियमिति । 'यज्ञायज्ञा वो अग्नये' (शुस. २७।४२) इत्यत्रोत्पन्नं यज्ञायज्ञियं तदेव छन्दः, बृहतीत्यर्थः । शब्रासा.

**किं छन्दः का देवताऽष्ठीवन्ताविति । पङ्क्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ ॥ १० ॥**

अष्ठीवन्तौ जानुप्रदेशावित्यर्थः । शब्रासा.

**किं छन्दः का देवता प्रतिष्ठे इति । द्विपदा छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥**

प्रतिष्ठे पादौ । शब्रासा.

**किं छन्दः का देवता प्राणा इति । विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥**

विच्छन्दा इति । विविधच्छन्दस्का ऋक् विच्छन्दाः, तादृक् छन्दः । शब्रासा.

**किं छन्दः का देवतोनातिरिक्तानीति । न्यूनाक्षरा छन्द आपो देवतोनातिरिक्तानि । सैषाऽऽत्मविद्यैव । एतन्मयो हैवैता देवता एतमात्मानमभिसंभवति । न ह्यत्रान्या लोक्यताया आशीरस्ति ॥ १३ ॥**

ऊनातिरिक्तानीति । उक्तेभ्योऽङ्गेभ्योऽन्यानि न्यूनाधिकपरिमाणान्यङ्गानि च किंछन्दस्कानि किंदेवत्यानि इति प्रश्नः । उत्तरम्—न्यूनाक्षरा छन्दः आपो देवतेति । 'आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः' इति श्रुतेः (नार. ८९) अपां सर्वात्मकत्वात् न्यूनातिरिक्तान्यङ्गान्यब्दैवत्यानीत्यर्थः । यदुक्तम्—अग्नेः शिरोग्रीवादिपरिकल्पनेन छन्दोदेवतास्वरूपत्वं तदेतत् पुण्यलोकसाधनमात्मविद्यैवेति प्रशंसति—सैषाऽऽत्मविद्यैवेति । आत्मन उदीरितच्छन्दोदेवतामयस्याग्नेः परिज्ञानमस्य सर्वाग्निचितः स्वस्य विद्या । य एवंविधमग्निं चिनुते, वेद वा, स एतन्मयः । अतोऽसावग्निसर्वविद्यादिदेवतास्वरूपः सः एतमात्मानमेवंविधच्छन्दोदेवतारूपावयवयुक्तं शरीरं अभिलक्ष्य संभवति उत्पद्यते । आशीर्नितो वेदितुश्च सर्वदेवतास्वरूपप्राप्तिरित्युक्तं भवति । न ह्यत्रेति । अत्र अग्नौ लोक्यतायै पुण्यलोकावाप्तये अन्या उक्तव्यतिरिक्ता आशीः प्रार्थना नास्तीत्यर्थः । शब्रासा.

चित्याग्निः एकाक्षरात्मकं विश्वात्मकं च ब्रह्म

**अथ यश्चितेऽग्निर्निधीयते तदेकं रूपमुभौ भवतः । तस्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः । सैषैकैवेष्टकाऽग्निरेव । तामेष सर्वोऽग्निरभिसंपद्यते । सैवेष्टकासंपत् । तदेतदेकमेवाक्षरं वौषडिति । तदेष सर्वोऽग्निरभिसंपद्यते । सैवाक्षरसंपत् ॥ ८ ॥**

एवं विभिन्नयोः स्वरूपयोरिष्टकापुरीषात्मनोरिन्द्राग्नित्वमुक्तम् । तयोरिदानीमैक्यमाह—अथ यश्चितेऽग्निर्निधीयत इति । उभौ इन्द्राग्नी एकं रूपमाहवनीयात्मकमभवताम् । कथमेकरूपत्वमिति ? तदिष्टकासंपत्त्या अक्षरसंपत्त्या चोपपादयति—सैषैकैवेष्टकाऽग्निरेवेति । यदग्निरूपं तत् सा एकेष्टका अग्निरूपा एष सर्वोऽग्निः तामिष्टकामभिलक्ष्य संपद्यते, इष्टकारूपेणैकेन संपन्न इति एक इति शब्दः, सा इयमिष्टकासंपत् । एकमेवाक्षरं वौषडिति । इत्यस्यार्थः— आहवनीयनिधानमन्त्रगतवौषट्पदयोगि

(१) शब्रा. १०।४।१।८,९.

५।४।१६) इत्यनेन श्लोकेन केवलकर्मनिन्दापुरःसर विद्या प्रशंसा । अथ वाव लोक एषोऽग्निश्चित इति । अत्र भूलोक एव एषः चितः अग्निः ध्येयः । अग्निसमान धर्मानाह — तस्याप एवेत्यादिना । तस्य भूलोकस्याग्नेः आप एव परिश्रितः समुद्रोदकान्येव परिश्रिद्रूपाणीति ध्येयानि, कूर्मो वर्तमानमनुष्या यजुष्मत्य इष्टकाः, पशवः सूददोहाः अमृतदोहाः अन्नमित्यर्थः । तद्वा एतदन्नं सूददोहमः (शत. ब्रा. ....) इत्यनेन ....... तत्पशव इत्यर्थः । ओषधयः वनस्पतयः एव पुरीषम् । आहुतिः समिध इत्यस्य । .... (स्यात्) पशवाहुतिः समिध इत्यस्यत्यनन्तरं स्पष्टीकरिष्यत । अथ यो ह ... रश्मिय चान्न ... नीप ता आहुतयस्ता समिधः (शत. ब्रा. १०।५।४।८) इति । ब्राह्म. अग्निः ज्वलन एव लोकंपृणा इष्टकाः । तस्मादग्न्याद्यग्निलोकंपृणारूपः तस्मात् एतत्सर्व परिश्रिदादिप्रमत्यादिरूपं पदिकमनुष्यादिकं अग्निमेवाभिसंपद्यते, अग्निना सर्वे सम्पन्नाः सम्पद्यन्ते यदक्षा भवन्ति । यथा चित्याग्नि लोकंपृणेष्टकाभिः सम्पन्नः । अयमर्थः — भूलोकस्य चित्याग्नित्वपरिज्ञाने समुद्रादि मनुष्यपश्वादीनां परिश्रितादिरूपेण ज्ञानाहुति ....... परिश्रिद्यजुष्मतीसूददोहाः पुरीषाहुतिसमिल्लोकंपृणारूपाः परिज्ञेया इति । वेदितुः फलमाह — स यो हैतदेवं वेदेति । एवं भूलोकं चित्याग्निरूपं वेद, स लोकंपृणामेव एव लोकाधिष्ठितम्याग्निमेव सम्पद्य तदात्मको भवतीत्यर्थः ।

शत्रामा.

**अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः । तस्य द्यावापृथिव्योरेव संधिः परिश्रितः । परेण ह्यन्तरिक्षं द्यावापृथिवी संधत्त. । ताः परिश्रितः । वयांसि यजुष्मत्य इष्टकाः । वर्षं सूददोहाः । मरीचयः पुरीषम् । आहुतयः समिधः । वायुर्लोकम्पृणा । तद्वा एतत्सर्वं वायुमेवाभिसंपद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम । एवं भूतमेतत्सर्वमभिसंपद्यते ॥ २ ॥**

एवमुक्तं 'अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः' इत्यादयः 'सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चितः' इत्यन्ता अष्टौ पर्याया व्याख्येयाः । तत्र यत्र विशेषः स उच्यते । अन्तरिक्षपर्याये द्यावापृथिव्योः संधिः परिश्रितः इत्यत्र विशदयति — परेण ह्यन्तरिक्षमिति । अन्तरिक्ष परेण पश्चात् अन्त इत्यर्थः । यत् द्यावापृथिव्यौ सपृक्ते, अतः । सम्बन्धः परिश्रित्रूपा .... । अत्र आपुमीलि: ५ ..... शत्रामा.

**द्यौर्ह त्वेवैषोऽग्निश्चितः । तस्याप एव परिश्रितः । यथा ह वा इदं कोशः समुब्जित. एवमिमे लोका अप्स्वन्तः । तद् या इमाँल्लोकान् परेणापः ताः परिश्रितः । देवा यजुष्मत्य इष्टकाः । यदेतस्मिँल्लोकेऽन्नं तत्सूददोहाः । नक्षत्राणि पुरीषम् । आहुतयः समिधः । आदित्यो लोकम्पृणा । तद्वा एतत्सर्वमादित्यमेवाभिसंपद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम । एवं भूतमेतत्सर्वमभिसंपद्यते ॥ ३ ॥**

द्युलोकपर्याये तस्या आप एव परिश्रितः इत्येतत् समर्थयते — यथा ह वा इदं कोशः समुब्जित इति । भूलोकपर्याये समुद्रोदकान्येव परिश्रितः, अत्र तथा न सन्तीति न समर्थनीयानि । यथा इदं इदानीम्, कोशः पात्रं, समुब्जितः संपिण्डितो भवति, एवमिमे त्रयो लोकाः अप्स्वन्तः आपसमन्तः वर्तन्ते । इमान् इमान् त्रीन् लोकान् परेण तथा पश्चात् आपः परिवेष्ट्य वर्तन्ते ताः परिश्रितः । अत्रापि यथापूर्व फलमुक्तम् । शत्रामा.

**आदित्यो ह त्वेवैषोऽग्निश्चितः । तस्य दिश एव परिश्रितः । ताः षष्टिश्च त्रिणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति । रश्मयो यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयः । तद् यत्परिश्रित्सु यजुष्मती प्रत्यर्पयति रश्मींस्तद्दिक्षु प्रत्यर्पयति । अथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहाः । अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम । एवं भूतमेतत्सर्वमभिसंपद्यते ॥ ४ ॥**

च छन्द इति । एकविंशतिस्तोत्रिया भवः स्तोम एकविंश उच्यते ।                                                  शब्रामा.

छन्दांसि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्त छन्दांसि । चतुरुत्तराणि त्रिचानि । तेषां सप्त च शतानि विंशतिश्चाक्षराण्यधि षट्त्रिंशत् । ततो यानि सप्त च शतानि विंशतिश्च इष्टका एव ताः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । अथ यान्यधि षट्त्रिंशत् स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव षट्त्रिंश्यौ । तद्यत्ते द्वे भवतः । द्व्यक्षरं हि शिरः ॥ ७ ॥

छन्दसामभिमन्यमाने [illegible] छन्दांसि ह त्वेवैषोऽग्निश्चित इति । तानि वा एतानि सप्त छन्दांसि इत्यादेरयमर्थः तत्र यथा [illegible], तानि गायत्र्यादीनि सप्त छन्दांसि । तदुत्तराणि चतुरुत्तराधिकानि त्रिचानि प्रत्येकं [illegible], त्रिरावृत्त[illegible] त्रिचानीत्युच्यते । [illegible] तेषां सप्त च शतानीति । तेषां प्रत्येकं [illegible] समाना छन्दसा [illegible] परिगणनं [illegible] विंशत्यधिकानि सप्तशतानि षट्त्रिंशदधिकानि चाक्षराणि भवन्ति । तत्र यानि विंशत्यधिकानि सप्तशताक्षराणि [illegible] षष्ट्युत्तरत्रिशताक्षराणि परिश्रितः, तावन्ति यजुष्मत्यः । अथाधिकानां षट्त्रिंशदक्षराणामधिकमासो मासानां विभाग[illegible] त्रिंशदात्मेति । आत्मा स मध्यभागः त्रिंशदक्षरात्मकः, प्रतिष्ठा पादौ द्व्यक्षरात्मकः, प्राणाः चक्षुरादयो द्व्यक्षरात्मकाः, शिरो द्व्यक्षरात्मकम् ।                                                  शब्रामा.

तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदा । अथ यानि विंशतिः सा विंशत्यक्षरा द्विपदा । अथ यानि त्रिंशत् सा त्रिंशदक्षरा विराट् । अथ यानि त्रयस्त्रिंशत् सा त्रयस्त्रिंशदक्षरा । अथ यानि चतुस्त्रिंशत् सा चतुस्त्रिंशदक्षरा स्वराट् । अथ यत्सर्वैश्छन्दोभिरयमग्निश्चितः तदतिच्छन्दाः । ता उ सर्वा इष्टका एव । इष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री । तेनैष गायत्रोऽग्निः । मृदापः इति त्रीण्यक्षराणि । त्रिपदा गायत्री । तेनो एवैष गायत्रः । अथ यदन्तरा छन्दसी तत्सूददोहाः । अथ यच्छन्दःस्वन्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यच्छन्दांसीत्याचक्षते तल्लोकम्पृणा । तद्वा एतत्सर्वं छन्दांस्येवाचक्षते । तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एतं भूतमनन्तमेवमभिसंपद्यते ॥ ८ ॥

एवमधिकानां षट्त्रिंशदक्षराणां विभागमभिधाय [illegible] – [illegible] षट्त्रिंशदक्षरा [illegible] इति । [illegible] षट्त्रिंशदक्षराया [illegible] यानि प्रथमानि दशाक्षराणि [illegible] एकपदा [illegible] सम्पन्ना । अ[illegible] विराजः पादा [illegible] एकपदा [illegible] । [illegible] यानि [illegible] प्रथमानि विंशत्यक्षराणि [illegible] द्विपदा विराट् सम्पन्ना । अथ यानि त्रिंशदक्षराणि त्रिंशदक्षरा विराट् सम्पन्ना । एवं त्रयस्त्रिंशता[illegible]क्षरा विराट् । अथ चतुस्त्रिंशत्संख्यातदक्षरा च स्वराण्नाम छन्दः सम्पन्नम् । एवमेषा बृहत्येव नानाछन्दोरूपेण स्तुता । अथातिच्छन्दोऽपि दर्शयति— अथ यत्सर्वैरिति । यस्मात् अयमग्निः गायत्र्यादिभिः छन्दोभिः चितः छन्दउपधानरूपः तस्मादतिच्छन्दा इत्युच्यते चिताग्निरतिच्छन्दा इति यत तत्र सर्वा इष्टका अतिच्छन्दोमय्य इत्युक्तम् । इष्टकेति नाम्नापि छन्दः सम्पादयति— इष्टकेति त्रीण्यक्षराणि, त्रिपदा गायत्रीति । सङ्ख्यासाम्यात् । अत इष्टका गायत्री [illegible] चितोऽग्निरपि गायत्र इत्युक्तम् । इष्टकाकरणानां मृदपामपि सङ्ख्यासाम्यात् गायत्रीछन्दस्त्वं तद्द्वारा अग्नेरपि [illegible]—मृदाप इति । [illegible] छन्दोभागः [illegible] । [illegible] स्थानमप्ययं [illegible] ।                                                  शब्रामा.

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसंपद्य[illegible]विंशं च स्तोमम् । बृहतीं च छन्दः ॥ ९ ॥

ता वा एता एकविंशतिर्बृहत्यः इत्यादि पूर्व[illegible] व्याख्येयम्। गब्रासा.

संवत्सरो ह त्वेवैषोऽग्निश्चितः। तस्य रात्रय एव परिश्रितः। ताः षष्टिश्च त्रीणि च शतानि भवन्ति। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयः। अहानि यजुष्मत्य इष्टकाः। ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि। अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति। य. स त्रयोदशो मास आत्मा। अर्धमासाश्च ते मासाश्च। चतुर्विंशतिरर्धमासा: द्वादश मासाः। अथ यदन्तराऽहोरात्रे तत्सूददोहाः। अथ यदहोरात्रेष्वन्नं तत्पुरीषम्। ता आहुतयः। ताः समिधः। अथ यदहोरात्राणीत्याख्यायन्ते तल्लोकम्पृणा। तदा एतत्सर्वमहोरात्राणीत्येवाख्यायते। तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एवं भूतमेतत्सर्वमभिसंपद्यते ॥१०॥

ता वा एता एकविंशतिर्बृहत्यः। एकविंशो वै स्वर्गो लोकः। बृहती स्वर्गो लोकः। तदेव स्वर्गं लोकमभिसंपद्यते। एकविंशं च स्तोमम्। बृहतीं च छन्दः ॥ ११ ॥

[illegible] आग्ना [illegible] षट्त्रिंश[illegible] [illegible] परिश्रितः [illegible]। [illegible] यजु[illegible]। यजुष्मत्य पुरीषेण [illegible] [illegible] इति [illegible] (स्त्र[illegible] १०।४। २।१४–१९)। [illegible] [illegible]। [illegible] ताः [illegible] [illegible] त्रयोदशमासः [illegible] आत्मा। चतुर्विंशतिरर्धमासाः द्वादशमासा[illegible] [illegible] [illegible] [illegible]। गब्रासा.

आत्मा ह त्वेवैषोऽग्निश्चितः। तस्यास्थीन्येव परिश्रितः। ताः षष्टिश्च त्रीणि च शतानि भवन्ति। षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि। मज्जानो यजुष्मत्य इष्टकाः। ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति। षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानः। अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति। यः स त्रयोदशो मास आत्मा। प्राणः सः। तस्य त्रिंशदात्मन्विधाः। प्रतिष्ठायां द्वे। प्राणेषु द्वे। शीर्षन्द्वे। तद् यत्ते द्वे भवतः। द्विकपालं हि शिरः। अथ येनेमानि पर्वाणि संततानि तत्सूददोहाः। अथैतत्त्रयं येनायमात्मा प्रच्छन्नः लोम त्वङ् मांसमिति तत्पुरीषम्। यत्पिबति ता आहुतयः। यदश्नाति ताः समिधः। अथ यदात्मेत्याख्यायते तल्लोकम्पृणा। तद्वा एतत्सर्वमात्मेत्येवाख्यायते। तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते। स यो हैतदेवं वेद। लोकम्पृणाम्। एवं भूतमेतत्सर्वमभिसंपद्यते ॥ १२ ॥

[illegible] पुरुषस्यास्थीनि परिश्रित्पेणोपासनी[illegible]। [illegible] मज्जानो यजुष्मतीरूपाः। अथ याः षट्त्रिंशदधिकाः [illegible] विभाग मासः स त्रयोदशो मास आत्मा प्राणः स तस्य त्रिंशदात्मविधा इति। [illegible] आत्मन आत्मनि [illegible] यजुष्म[illegible]। प्रतिष्ठायां पादयोः द्व[illegible]। प्राणेषु चक्षुःश्रोत्रादिषु [illegible]द्वयम्। [illegible]। एवं च षट्त्रिंशदात्मा प्राणा [illegible] प्राणाः [illegible] षट्त्रिंशदिति आत्म प्रतिष्ठाप्राणशिरो[illegible] षट्त्रिंशदुपासनीया इत्युक्तम्। [illegible] प्राणाः चक्षुरादिभिरस्था [illegible] [illegible] इति विशेषः। सन्ततानि पर्वाणि[illegible] सूददोहाः। लोम त्वङ्मांसं मा प्रच्छन्न इति न [illegible] पुरीषमित्यर्थः। यत्पिबति ता एव आहुतयः। यदश्नाति ता एव समिधो [illegible]। [illegible] [illegible]। गब्रासा.

ता वा एता एकविंशतिर्बृहत्यः। एकविंशो वै स्वर्गो लोकः। बृहती स्वर्गो लोकः। तदेव स्वर्गं लोकमभिसंपद्यते। एकविंशं च स्तोमम्। बृहतीं च छन्दः ॥ १३ ॥

बृहतीसंपादनादिकं पूर्ववद्बोद्धव्यम्। गब्रासा.

सीनस्य फलमाह—यो वा एत प्रतिष्ठामिति । यः कश्चिदेत यथोक्तमेत वैश्वानरं वेद स पुनर्मृत्यु जयति, सर्वमायुः अमृतत्वमेति । एष प्रतिष्ठास्यः वैश्वानरस्या [illegible] परमेश्वरस्य [illegible] वैश्वानरः । [illegible] निपातद्वयम् । [illegible] वैश्वानरस्य [illegible] जानाति [illegible] विपरीतग्राहिणोऽस्याभावा [illegible] गमनागमनाभावप्रसङ्ग [illegible] एकदेशज्ञानत्व [illegible] वैश्वानरस्य [illegible] नरः [illegible] वागन्तर्गत [illegible] ।

[illegible] स्राप्ता.

अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य. कं त्व वैश्वानरं वेत्थेति । अप एव राजन्निति होवाच । ओमिति होवाच । एष वै रयिर्वैश्वानरः । एतं हि वै त्व रयिं वैश्वानरं वेत्थ । तस्मात्त्वं रयिमान्पुष्टिमानसि । यो वा एतं रयिं वैश्वानरं वेद अप पुनर्मृत्युं जयति । सर्वमायुरेति । बस्तिस्त्वा एष वैश्वानरस्य । बस्तिस्त्वाऽहास्यद् यदि ह नागमिष्य इति । बस्तिस्ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा॥७॥

[illegible] प्राचीनयोग्य [illegible] सत्ययज्ञस्य [illegible] धनम् । [illegible] जानाति [illegible] तस्माद्रयिमान् पुष्टिमानसि । [illegible] वैश्वानरस्य [illegible] इति निपातद्वयम् । [illegible] [illegible] सर्वाति [illegible] । स्राप्ता.

अथ होवाच महाशालं जाबालम् । औपमन्यव कं त्व वैश्वानरं वेत्थेति । आकाशमेव राजन्निति होवाच । ओमिति होवाच । एष वै बहुलो वैश्वानरः एतं हि वै त्व बहुलं वैश्वानरं वेत्थ । तस्मात्त्व बहु प्रजया पशुभिरसि । यो वा एतं बहुलं वैश्वानरं वेद । अप पुनर्मृत्यु जयति । सर्वमायुरेति । आत्मा त्वा एष वैश्वानरस्य । आत्मा त्वाऽहास्यत् यदि ह नागमिष्य इति । आत्मा ते विदितोऽभविष्यत् यदि ह नागमिष्य इति वा ॥ ८ ॥

औपमन्यव इति महाशालस्य सम्बोधनम् । आकाशा [illegible] वैश्वानरं वेद [illegible] । [illegible] बहुत्वमाकाशस्य सर्वगतत्वात् । [illegible] प्रजया पशुभिर्बहुरसि । आत्मा [illegible] । एष आकाशो वैश्वानरस्यात्मा म [illegible] शरीर [illegible] इति निपात द्वयम् । [illegible] युष्मदेकवचनादेशः । [illegible] । स्राप्ता.

अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य. कं त्वं वैश्वानरं वेत्थेति । वायुमेव राजन्निति होवाच । ओमिति होवाच । एष वै पृथग्वर्त्मा वैश्वानरः । एतं हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ । तस्मात्त्वां पृथक्पृथक्श्रेणयोऽनुयान्ति । यो वा एत पृथग्वर्त्मानं वैश्वानरं वेद । अप पुनर्मृत्युं जयति । सर्वमायुरेति । प्राणस्त्वा एष वैश्वानरस्य । प्राणस्त्वाऽहास्यद् यदि ह नागमिष्य इति । प्राणस्ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥९॥

[illegible] वैश्वानरं [illegible] एष वै पृथग्वर्त्मा वैश्वानर इति । नाना वर्त्म मार्गो यस्य [illegible] वर्तमानस्य [illegible] पृथग्वर्त्मा [illegible] वैश्वानरस्य जानाति [illegible] अनुगच्छन्ति । प्राणस्त्वा एष इति । पृथग्वर्त्मा [illegible] वैश्वानरः । प्राणवायु [illegible] वैश्वानरः । प्राण [illegible] उत्क्रमिष्यत । स्राप्ता.

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य. कं त्वं वैश्वानरं वेत्थेति । आदित्यमेव राजन्निति होवाच । ओमिति होवाच । एष वै सुतेजा वैश्वानरः । एतं हि वै त्वं सुतेजसं वैश्वानरं वेत्थ । तस्मा

त्तवैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति। यो वा एतं सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति। सर्वमायुरेति। चक्षुस्त्वा एतद्वैश्वानरस्य। चक्षुस्त्वाऽहास्यद् यदि नागमिष्य इति। चक्षुस्ते विदितमभविष्यद् यदि ह नागमिष्य इति वा ॥ ८ ॥

वैयाघ्रपद्य इति इन्द्रद्युम्नसंबुद्धिः। आदित्यमेव वैश्वानरं वेद्मीति इन्द्रद्युम्नोत्तरम्। एष वै सुततेजा इति। सुतमभिषुतं सोमरूपं तेजो यस्य सोऽयं, तदात्मनो वैश्वानरस्य परिज्ञानात्तव गृहेषु सुतोऽभिषुतः सोमरसः, अद्यमानः एतदुपलक्षण पुरोडाशादि, पच्यमानः अक्षीयमाणः सर्वदा विनाशरहितस्तिष्ठति। चक्षुस्त्वा एतत इति। एष सुततेजा आदित्यात्मको वैश्वानरः अवयविनो वैश्वानरस्य परमेश्वरस्य चक्षुरेव न समस्तः। तस्मादेकदेशोपासकत्वाच्चक्षुस्त्वत्तोऽगमिष्यद्यदि नागमिष्यः। चक्षुर्मात्रमेव विदितं ज्ञातम्। यदि नागमिष्यः इति समानम्।                                   शश्रामा.

अथ होवाच जनं शार्कराक्ष्यम्। सायवस, कं त्वं वैश्वानरं वेत्थेति। दिवमेव राजन्निति होवाच। ओमिति होवाच। एष वा अतिष्ठा वैश्वानरः। एतं हि वै त्वमतिष्ठां वैश्वानरं वेत्थ। तस्मात्त्वं समानानतितिष्ठसि। यो वा एतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति। सर्वमायुरेति। मूर्द्धा त्वा एष वैश्वानरस्य। मूर्द्धा त्वाऽहास्यद् यदि ह नागमिष्य इति। मूर्द्धा ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥ ९ ॥

सायवस इति जनसंबुद्धिः। शार्कराक्ष्य इति ऋषिः तस्य गोत्रम्। दिवमेव द्युलोकात्मकमेव वैश्वानरं वेद्मीति जनस्योत्तरम्। एष वा अतिष्ठा इति। अतीत्य सर्वमतिक्रम्य तिष्ठतीत्यतिष्ठा। अतिष्ठागुणको वैश्वानर इत्यर्थः। यस्मात् त्वमतिष्ठागुणपरिज्ञानी तस्मात् समानान् अन्यान् अतितिष्ठसि अतिक्रम्य वर्तसे। मूर्धा त्वा एष इति। एषः अतिष्ठागुणको द्युलोकः तु वै वैश्वानरः अवयविनो वैश्वानरस्य परमेश्वरस्य मूर्द्धैव न समस्तः। अतः समस्तमूर्द्धवैश्वानरस्यापरिज्ञानान्मूर्द्धविपरीतग्राहिणं मूर्द्धा अहास्यत् त्यक्तोऽभविष्यत् यदि मां नागमिष्यः। अथवा ते तव मूर्द्धैव विदितो ज्ञातोऽभविष्यत यदि मां नागतोऽभविष्यः, मावकाशपीयं मामागतोऽसीत्यभिप्रायः।                                   शश्रामा.

तान्होवाच। एते वै यूय पृथग्वैश्वानरान् विद्वांसः पृथगन्नमघस्त। प्रादेशमात्रमिव ह वै देवाः सुविदिताः अभिसंपन्नाः। तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति ॥ १० ॥

एवमसकलमत्ययज्ञादीनामृषीणां वैश्वानरस्य एकैकदेशमात्रपरिज्ञानं न युक्त (इति) पादादिमूर्द्धान्तावयवसंपूर्णं वैश्वानरं पुरुषमुपदिदिक्षुराह—तान्होवाच। एते वै यूय इत्यादिब्राह्मणशेषेण। तानुक्तवैश्वानरदर्शनवत उवाच। एते यूयं पृथक् पृथगेकदेशरूपान् वैश्वानरान् विद्वांसः पृथगन्नं भुक्तवन्तः स्थ, अत उक्तावयवसंपूर्णं कृत्स्नं वैश्वानरं जानीतेति तात्पर्यम्। यत्त्वेव यथोक्तावयवैः पृथिवीपादादिभिः द्युमूर्द्धान्तावयवैर्विशिष्टमेकं वस्तु तत्प्रादेशमात्रं प्रादेशप्रमाणमिव देवाः सुविदिताः सम्यक् ज्ञानवन्तोऽभिसंपन्नाः, प्राप्तवन्तः बभूवुरित्यर्थः। यथा एतदेकं पादादिविशिष्टं वस्तु प्रादेशमात्रमेवाभिसंपादयिष्यामि, तथा, तुशब्द एवकारार्थे। तथैव तद्वदेव वः युष्मभ्यमेतान् वैश्वानरावयवान् वक्ष्यामि। अत्र मूर्द्धादिचुबुकान्तप्रतिष्ठः इति प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरवयवैरध्यात्मं मीयत इति प्रादेशमात्रपरिकल्पनम्। आचार्यैस्तु (ब्रसू. १।२।२९, ३०, ३१ इत्यत्र) शाखान्तरानुसारेण प्रादेशमात्रस्य बहुधा प्रवचनं कृतम्। प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयत इति प्रादेशमात्रः, मुखादिषु करणदेशेषु कर्तृत्वेन मीयत इति प्रादेशमात्रः, द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रदेशाः द्युलोकादय एव, तावत्परिमाणो वा प्रादेशमात्रः, मूर्द्धादिचुबुकान्तप्रतिष्ठ इति वा प्रादेशमात्रः इति।                                   शश्रामा.

स होवाच मूर्द्धानमुपदिशन् एष वा अतिष्ठा वैश्वानर इति। चक्षुषी उपदिशन्नुवाच एष वै सुततेजा वैश्वानर इति। नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मा वैश्वानर इति। मुख्यमाकाशमु-

**पदिशन्नुवाच एष वै बहुलो वैश्वानर इति । सुम्ना अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति । छुबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति । स एषोऽग्निर्वैश्वानरो यत्पुरुषः । स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद । अप पुनर्मृत्युं जयति । सर्वमायुरेति । न ह अस्य ब्रुवाणं चन वैश्वानरो हिनस्ति ॥ ११ ॥**

अथ राजा पूर्वोक्तान् अतिष्ठावैश्वानरादीन् वैश्वानरावयवान् मूर्धादिचुबुकान्तावयवेन प्रदर्शितवानिति श्रुतिराह—स होवाच मूर्धानमुपदिशन्निति । मूर्धानमुपदिशन् राजा एष अतिष्ठा वैश्वानरः इत्युक्तवान् । मूर्धा अवयवोऽतिष्ठागुणः वैश्वानरात्मक इत्यर्थः । चक्षुर्हि सुतेजा वैश्वानरः । नासिका पृथग्वर्त्मा वैश्वानरः । मुख्य मध्ये भवमाकाशम् उपदिशन् बहुलगुणो वैश्वानर इत्युक्तवान् । सुम्नाः मुखे भवा अप उदकान्युपदिशन् रयिगुणो वैश्वानर इत्युक्तवान् । चुबुकमधरावयवमुपदिशन्नेष प्रतिष्ठात्मको वैश्वानर इत्युक्तवान् । चुबुकमिति अधरमुखस्य त्वक्मित्युच्यते । स एषोऽग्निर्वैश्वानरो यत्पुरुषः मूर्धादिचुबुकान्त प्रादेशमात्रस्थले पुरुषावयवानां शिरःप्रभृतीनां पादान्तानां परिकल्पनात् । एषोऽतिष्ठादिगुणवैश्वानरसमष्टिरूप एषो वैश्वानरोऽग्निरित्युच्यत इति । विश्वान् नरान् पुण्यपापरूपां गतिं नयतीति विश्वानरः, सर्वात्मा एक एव ईश्वरः । विश्वानर एव वैश्वानर इति । आचार्यैस्तु वैश्वानरस्य एवमर्थ उक्तः । 'विश्वश्चायं नरश्च, विश्वेषां वा अयं नरः, विश्वे वा नरा अस्य, इति विश्वानरः परमात्मा सर्वात्मत्वात् । विश्वानर एव वा वैश्वानरः । तद्धितोऽनन्यार्थः । राक्षसवायसादिवत् ।'(ब्रसूकर. १।२।२८) इति । यद्वा विश्वैर्वा नरः प्रत्यगात्मा यो विभज्य नीयते इति स वैश्वानरः इति । यथोक्तं वैश्वानराग्नि विदुषः फलमाह—स यो हैतमेवमग्निमिति । पुरुषविधं पुरुषावयवयुक्तम् । पुरुषेऽन्तः प्रतिष्ठितं मूर्धादिचुबुकान्तप्रादेशमात्रमित्यर्थः । तादृशं वैश्वानराग्निं यो वेद स पुनर्मृत्युं जयति । सर्वमायुः अमृतत्वमेति । अस्य वैश्वानराग्निः । व्यत्ययेन कर्माणि षष्ठी । ब्रुवाणं उपदेष्टारमपि वैश्वानरो न हिनस्ति । वैश्वानरपदेन परमात्मा विवक्षितः (विमृश्यते?) इति 'वैश्वानरः साधारणशब्दविशेषात्' (ब्रसू. १।२।२४) इत्यस्मिन्नधिकरणे आचार्यैः समर्थितम् । एतदर्थमन्यायविद्भिः श्लोकाभ्यां सङ्गृहीतः— 'वैश्वानरः को नु भूतदेवजीवेश्वरेषु कः । वैश्वानरात्मशब्दाभ्यामीशादन्येषु कश्चन ॥ सुमूर्धत्वादिना ब्रह्मशब्दाच्चेश्वर इष्यते । वैश्वानरात्मशब्दौ तावीश्वरस्यापि वाचकौ ॥' (वै. न्या. १।२।७) इति । [अधिकरणरचना तु अग्रे छान्दो. ५।१८।१ इत्यत्र द्रष्टव्या ] शब्रामा.

आत्मा एव अत्ता । स एव च अग्निरूपः, अर्करूपः, उक्थरूपश्च ।

**द्वयं वा इदम् । अत्ता चैवाद्यं च । तद् यदोभयं समागच्छति अत्तेवाख्यायते नाद्यम् ॥ १ ॥**

इदानीं पुरुषस्यैवाग्निविध अर्कविध उक्थविधत्वमुच्यते—द्वयं वा इदमिति । इदं जगत् अत्ता चैवाद्यं च, इति द्वयं द्व्यात्मकम् । योऽत्ता भोक्ता, आद्यं भोग्यं, तदुभयं यदा समागच्छति युक्तमेकीभूतं भवति तदा द्वयं अत्तेवाख्यायते, आद्यमिति नाख्यायते । शब्रामा.

**स वै यः सोऽत्ता अग्निरेव सः । तस्मिन् यत्किञ्च अभ्यादधति आहितय एवास्य ताः । आहितयो ह वै ता आहुतय इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः ॥ २ ॥**

योऽत्ते युक्तः सोऽग्निरेव । तस्मिन्नत्तृरूपेऽग्नौ यत् किञ्च वस्त्वभ्यादधति प्रक्षिपन्ति, अस्याग्नेस्ताः प्रक्षिप्ता आहितय इत्युच्यन्ते । आधानादाहितयः । आहितीनामेवाहुतित्वम् । शब्रामा.

**आदित्यो वा अत्ता । तस्य चन्द्रमा एवाहितयः । चन्द्रमसं ह्यादित्य आदधाति । इत्यधिदेवतम् ॥ ३ ॥**

अत्राक्तयोः अत्त्राहुत्योरधिदैवमध्यात्मं चार्थमाह—आदित्यो वा अत्तेति । योऽयमत्ताऽग्निः स आदित्यः । तस्याहितयः चन्द्रमाः । 'चन्द्रमसं ह्यादित्य आदधाति' इत्यनेन चन्द्रमस आदित्य आधानादाहितित्वं प्रतिपादितम् । शब्रामा.

**अथाध्यात्मम् । प्राणो वा अत्ता । तस्यान्नमेवाहितयः । अन्नं हि प्राण आदधाति । इति नु अग्नेः ॥ ४ ॥**

(१) शब्रा. १०।६।२।१-११.

अध्यात्मं प्राण एवात्ता । तस्य आद्यं अन्नमेवाहितयः । प्राणे अन्नस्याधानादाहितित्वं व्यक्तम् । इति त्वग्नेः इति । इति नु अत्ता आद्य एवमुभयं भागद्वयमग्नेरेव समाख्या । स चात्ताऽग्निरिति । तस्याग्नेरत्र च निर्दिष्टानां वस्तूनामाधिदैवाध्यात्मपरत्वेनार्थद्वयस्याग्न्यानादग्निविधोक्तिरिति शेषः । अग्निशब्दोपजीवनादग्निविधः पुरुष इत्युक्तं भवतीति तात्पर्यम् । शब्रामा.

**अथार्कस्य । अग्निर्वा अर्कः । तस्याहुतय एव कम् । आहुतयो ह्यग्नये कम् ॥ ५ ॥**

अर्कशब्दोपजीवनेन पूर्ववदग्न्याहुत्योरर्थद्वयं दर्शयितुं प्रतिजानीते अथार्कस्येति । विधोच्यते इति शेषः । अग्निर्हि अर्कः इत्युच्यते । तस्याहुतय एव क इति कपदेनोच्यते । हि यस्मात् अग्नेः आहुतयः कं सुखं हेतवोऽतोऽर्कशब्देनाग्न्याहुतिद्वयं विवक्षितम् इत्यर्थः । शब्रामा.

**आदित्यो वा अर्कः । तस्य चन्द्रमा एव कम् । चन्द्रमा ह्यादित्याय कम् । इत्यधिदैवतम् ॥ ६ ॥**

**अथाध्यात्मम् । प्राणो वा अर्कः । तस्यान्नमेव कम् । अन्नं हि प्राणाय कम् । इति नु एवार्कस्य ॥ ७ ॥**

एतयोरर्कवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेनार्थमाह—आदित्यो वा अर्क इति, अथाध्यात्ममिति । इति न्वेवार्कस्य इति पूर्ववद्व्याख्येयम् । शब्रामा.

**अथोक्थस्य । अग्निर्वा उक्, तस्याहुतय एव थम् । आहुतिभिर्ह्यग्निरुत्तिष्ठति ॥ ८ ॥**

उक्थशब्दोपजीवनेन पूर्ववदग्न्याहुत्योरर्थद्वयं वक्तुं प्रतिजानीते—अथोक्थस्येति । उक्शब्दवाच्यः अग्निः, थंशब्दवाच्या आहुतयः । हि यस्मात् आहुतिभिः अग्निरुत्तिष्ठति । उत्तिष्ठत्यनेनाग्निरिति उक्थशब्दनिष्पत्त्या अग्न्याहुत्योरुक्थशब्दवाच्यत्वम् । छान्दसो वर्णोपजनो ( वर्णो यजनो ? ) द्रष्टव्यः । शब्रामा.

**आदित्यो वा उक् । तस्य चन्द्रमा एव थम् । चन्द्रमसा हि आदित्य उत्तिष्ठति । इत्यधिदैवतम् ॥ ९ ॥**

**अथाध्यात्मम् । प्राणो वा उक् । तस्यान्नमेव थम् । अन्नेन हि प्राण उत्तिष्ठति । इति नु एवोक्थस्य । स एषोऽग्निविधः अर्कविधः उक्थविधः यत् पुरुषः । स यो हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते । विदुषो हैवास्यैवं भ्रातृव्यो म्लायति ॥ १० ॥**

तयोरुक्थवाच्ययोरग्न्याहुत्योराधिदैवाध्यात्मपरत्वेनार्थमाह—आदित्यो वा उगिति, अथाध्यात्ममिति । इति न्वेवोक्थस्येति पूर्ववत् । एवमग्न्यादिशब्दार्थवचनेन यदुक्तं तद्दर्शयति—स एषोऽग्निविध इति । यत् पुरुषः स इति । तस्योक्तरीत्याऽग्निविधादिसंपत्तिः । यथोक्तं पुरुषं विदुषः फलमाह—स यो हैतमेवमिति । भ्रातृव्यः सपत्नः म्लायति नश्यति । शब्रामा.

**प्राणेन वा अग्निर्दीप्यते, अग्निना वायुः, वायुनाऽऽदित्यः, आदित्येन चन्द्रमाः, चन्द्रमसा नक्षत्राणि, नक्षत्रैर्विद्युत् । एतावती वै दीप्तिः । अस्मिंश्च लोकेऽमुष्मिंश्च । सर्वा हैतां दीप्तिं दीप्यते । अस्मिंश्च लोकेऽमुष्मिंश्च । य एवं वेद ॥ ११ ॥**

प्राणाग्न्यादिचन्द्रमःप्रसङ्गाज्ज्योतिषां दीपकत्वं फलं चाह—प्राणेन वा अग्निर्दीप्यत इति । योऽयमग्निरत्ता इत्युक्तः स हि प्राणेन दीप्यते । प्राणवायोरभावेऽल्पं वै (वा) अग्नेर्दीपनं नास्ति । अग्निना वायुर्दीप्यते । वायुनाऽऽदित्यावष्टम्भात् भानोर्दीपनम् । आदित्येन चन्द्रमसः प्रकाशो ज्योतिःशास्त्रे प्रसिद्धः । रात्रौ नक्षत्राणि चन्द्रमसा प्रकाशन्ते । दिवा हि महत्तरेण सूर्यप्रकाशेन तिरोभवत्वान्न तदा प्रकाशः । नक्षत्रैर्विद्युत्प्रकाश्यते एतावती हि लोकद्वये दीप्तिः । भूलोके हि प्राणाग्निवायवः, इतरे इतरस्मिन्निति । यः पुरुषः एतावतीं लोकद्वयगतां दीप्तिं वेद जानाति उपास्ते तस्य सर्वतेजोरूपत्वं फलमित्यर्थः । शब्रामा. *

*अग्नेः परमात्मत्वव्यञ्जकविशेषणानि अस्मिन् प्रकरणेऽसंगृहीतवचनान्तरेष्वपि समुपलभ्यन्ते । यथा—

**अमर्त्यः**--ऋसं १।४४, ५८, ७०, ३।२, १०, ११, २४, २७, ४।१, ८, ५, १४, १८; ६।३, ९, १२, १६; ७।१, १५; ८।११, १९ १०२; १०।२१, ७९, ८७, १०८, १२२, १४०. असं. ७।८४. शुमं. २१।१५. २८।३, १७.

**अमृतः**--ऋसं. १।१३, २६, ४४, ५८, ६८, ७७ २।१०; ३।१, ३, १४, २०, २९; ४।२, ३, ५, ११.

## इन्द्रः

विश्वव्यापकः, अनुपमेयः, अनन्तः, सर्वनियन्ता, स्वर्गपतिः, विभुश्च

[1]त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः।
विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान्॥

५।१८, ६।४, ५, ७, १५, ४८; ७।४, १६; ८।२३, ७१, ७४; १०।८५, ७०, ९१. असं. १२।२.

अमृतस्य केतुः-- ऋसं. ६।७.

अमृतस्य नाभिः--ऋसं. ३।१७.

अमृतस्य रक्षिता -ऋसं. ६।७, ९.

अमृतानां प्रथमः-- ऋसं. १।२४.

प्रजापतिः--ऋसं. ९।५.

परमे पदे तस्थिवान्--ऋसं. १।७२.

देवानां देवः--ऋसं. १।३१, ६८, ९४. शुसं. २०।४१.

देवानां पिता--ऋसं. १।६९.

जनयन् भुवना--ऋसं. ७।५.

जनिता रोदस्योः -ऋसं. १।९६; ३।६; ६।८.

धर्ता सर्वस्य- ऋसं. १।६७; ६।८.

जनक. सर्वस्य--ऋसं. ६।८; १०।८, ८८, १५६.

विपश्चितामसुर --ऋसं. ३।३.

विश्वकर्मा--असं. २।३४, ३५.

विश्वकृत्--असं. ६।४७.

विश्वः--ऋसं. १।१२८; १०।८७. शुसं. २८।२९.

विश्वरूपः--ऋसं. १।१३.

विश्ववारः--ऋसं. ३।१७; ७।५, ७, १६; १०।१५०. असं. ५।२. शुसं. २७।१३.

विश्ववित्--ऋसं. ३।१९, २९; ५।४; १०।९१.

विश्वशम्भूः--असं. ६।४७.

विश्वदेवः--ऋसं. १।१४२.

विश्वदेव्यः--ऋसं. १।१४८.

अध्यक्षः धर्मणाम्--ऋसं. ८।४३.

अदितिः--ऋसं. १।९४; २।१; ४।१; ७।९; ८।१९; १०।११.

पिता, माता, भ्राता, पुत्रः, बन्धुः, सखा च जनानाम्--ऋसं. १।२६, ३१, ७५, १६१; २।१; ५।४; ६।१; ८।४३, ६४; १०।७.

(१) ऋसं. १।५२।१३.

हे इन्द्र त्वं पृथिव्याः प्रथितायाः विस्तीर्णाया भूमेः प्रतिमानं भुवः प्रतिनिधिर्भवसि। यथा भूर्लोको महानचिन्त्यशक्तिः एवं त्वमपीत्यर्थः। तथा ऋष्ववीरस्य। वीरयन्ति विक्रान्ता भवन्तीति वीरा देवाः। ऋष्वा दर्शनीया वीरा यस्य स तथोक्तः। तस्य बृहतः बृहितस्य प्रवृद्धस्य स्वर्गलोकस्य पतिर्भूः पालयिताऽसि। तथा अन्तरिक्षं अन्तरा क्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानमाकाशं विश्वं सर्वमपि महित्वा महत्त्वेन सत्यं आप्राः नितरां तेन आ समन्तादपूरयः। अतः त्वावान् त्वत्सदृशः अन्यः कश्चित् नकिः अस्ति नास्तीति यदेतत् तत् अद्धा सत्यमेव। ऋसा.

[2]न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः।
नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक्॥

यस्य इन्द्रस्य व्यचः व्यापनं द्यावापृथिवी द्यावापृथिव्यौ न अनु आनशाते प्राप्तुमसमर्थे अभवताम्। तथा रजसः अन्तरिक्षलोकस्योपरि सिन्धवः स्यन्दनशीला आपो यस्य इन्द्रस्य तेजसः अन्तं अवसानं न आनशुः न प्रापुः। उत अपि च सोमपानेन मदे हर्षे सति स्ववृष्टिं स्वीकृतवृष्टिं वृत्रादिं युध्यतः युध्यमानस्य अस्य इन्द्रस्य बलस्य अन्तं वृत्रादयः न प्रापुः। अतो हे इन्द्र एकः त्वं अन्यत् स्वव्यतिरिक्तं विश्वं सर्वं भूतजातं आनुषक् आनुपूर्व्येण चकृषे। सकलमपि भूतजातं त्वदधीनमभूदिति भावः। ऋसा.

[3]आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि।
न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ॥

इन्द्रः स्वतेजसा पार्थिवं पृथिव्याः सम्बन्धि वस्तुजातं रजः अन्तरिक्षलोकं च आ पप्रौ आपूरयति। तथा दिवि द्युलोके रोचना रोचमानानि दीप्तानि नक्षत्राणि बद्बधे बबन्ध स्थापितवान्। अतो हे इन्द्र त्वावान् त्वत्सदृशः कश्चन न जातः नोत्पन्नोऽस्ति। न च जनिष्यते उत्पत्स्यमानोऽपि नास्ति। तादृशस्त्वं विश्वं सर्वं रक्षितव्यं जगत् अति ववक्षिथ अतिशयेन वोढु-

(२) ऋसं. १।५२।१४. (३) ऋसं. १।८१।५.

मिन्छामि । सर्वस्य जगतो निर्वाहको भवामीत्यर्थः ।

ऋमा.

[1]यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीम् ।

स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो भवत्विन्द्र ऊती ॥

यस्य इन्द्रस्य उक्थं प्रशस्यं शवसा मानं बलेन सर्वस्य परिच्छेदकं सर्वेषां बलस्योपमानभूतं वा रोदसी द्यावापृथिव्यौ विश्वतः सीं सर्वतः अजस्रं अनवरतं परिभुजत् परितः सर्वतो भुनक्ति पालयति । स इन्द्रः क्रतुभिः अस्माभिः कृतैर्यागैः मन्दसानः मोदमानः सन् पारिषत् अस्मान् दुरितात् पारयतु । ऋमा.

[2]न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।

स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥

देवता देवस्य दानादिगुणयुक्तस्य यस्य इन्द्रस्य शवसः बलस्य अन्तं अवसानं देवाः वस्वाद्या देवगणाः न आपुः न आनशिरे तथा मर्ताः मनुष्याः आपश्चन आपोऽपि न प्रापुः । स तादृशः इन्द्रः त्वक्षसा शत्रूणां तनूकर्त्रा आत्मीयेन बलेन क्ष्मः पृथिव्याः दिवश्च स्वर्गस्य च प्ररिक्वा प्रकर्षेण रेचको भवति । लोकद्वयाद-प्यस्य बलमतिरिच्यत इत्यर्थः । मरुद्भिर्युक्तः स इन्द्रः नः अस्माकं ऊती ऊतये रक्षणाय भवतु । ऋमा.

**महतामपि भयङ्करः, बलिष्ठः, विश्वनियन्ता, दानवहन्ता, विश्वकृत्, श्रद्धागम्यः, सर्वानुशास्ता, भक्तानुग्राहकः, पापानां अभक्तानामभिभविता, योध्दृणामीश्वरः, विश्वस्य प्रतिमानम्**

[3]यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।

यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥

गृत्समदो ब्रूते । जनासः जना हे असुराः यो जात एव जायमान एव सन् प्रथमः देवानां प्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान् पर्यभूषत् परिभूषत रक्षकत्वेन पर्यग्रहीत । यद्वा सर्वान् देवान् पर्यभूषत पर्यभवत् अत्यक्रामत् । यस्य इन्द्रस्य शुष्मात् शरीरगतात् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेतां अबिभीताम् । भ्यस भये । 'भ्यसते रेजत इति भयवेपन-योः' ( नि. ३।२१ ) इति नैरुक्ताः । अभ्यसेताम-वेपेतां वा । तथा च मन्त्रान्तरम्—'इमे चिदस्य ज्रयसो नु देवी इन्द्रस्यौजसो भियसा जिहाते' ( ऋसं. १।८०।११ ) इति । नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः सः इन्द्रः नाहमिति । अत्र निरुक्तं—'यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा यस्य बलात् द्यावापृथिव्याव-प्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता' ( नि. १०।१० ) इति । ऋमा.

[1]यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान् प्रकुपिताँ अरम्णात् ।

यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इन्द्रः ॥

हे जनाः यः इन्द्रः व्यथमानां चलन्तीं पृथिवीं अदृंहत् शर्करादिभिर्दृढामकरोत् । यः च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान् । यः च वरिवः उरुतमं अन्तरिक्षं विममे निर्ममे विस्तीर्णं चकारेत्यर्थः । यः च द्यां दिवं अस्तभ्नात् नस्तम्भ निरुद्धामकरोत् । सः एव इन्द्रः नाहमिति । ऋमा.

[2]यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा वलस्य ।

यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥

---

( १ ) ऋसं. १।१००।१४. (२) ऋसं. १।१००।१५.

( ३ ) ऋसं. २।१२।१; असं. २०।३४।१; तैसं. १।७।१३।२; कासं. ८।१६ ( ४५ ); मैसं. ४।१२।३ (७८) जनास ( जनासः ); ऐब्रा. २१।२।१; शाब्रा. २१।४, २२।४; एआ. १।५।२।५, ५।३।१।२.

( १ ) ऋसं. २।१२।२; असं. २०।३४।२.

( २ ) ऋसं. २।१२।३; असं. २०।३४।३; मैसं. ४।१४।५ जनास ( जनासः )

यः अहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीला अपः अरिणात् प्रेरयत । यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीरिरिणात । यः च वलस्य वलनामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धाः गाः उदाजत् निरगमयत् । यः च अश्मनोः, अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुस्पर्शैर्मेघयोः अन्तः मध्ये वैद्युतं अग्निं जजान उत्पादयामास । यश्च समत्सु समक्षयन्ति यो तृणामागृ[illegible]र्षीति समदः सङ्ग्रामाः । तेषु संवृक् भवति । सः इन्द्रः नास्तीति । ऋग्भा.

[1]येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवां लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥

येन इन्द्रेण इमा इमानि विश्वा च्यवना नश्वराणि भुवनानि कृतानि स्थिरीकृतानि । यः च दासं वर्णं शूद्रादिकम् । यद्वा दासमुपक्षपयितारम् । असुरं निकृष्टमसुरं गहा गुहायां गूढस्थाने नरके वा अकः अकार्षीत् । लक्षं लक्ष्यं जिगीवान् जितवान् । यः अर्यः अरेः शत्रोः सम्बन्धीनि पुष्टानि समृद्धानि आदत आदत्ते । तत्र दृष्टान्तः । श्वघ्नीव । श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षितं मृगं परिगृह्णाति तद्वत् । ऋग्भा.

[2]यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥

अपश्यन्तो जनाः घोरं शत्रूणां घातकं यं पृच्छन्ति स्म कुह सेति । स इन्द्रः कुत्र वर्तते इति । न क्वचिदस्ति[illegible]ति मन्यमाना जनाः एनं इन्द्रं आहुः एषः इन्द्रः न अस्तीति । तथा च मन्त्रः—‘नेन्द्रो अस्तीति नेम उ त्व आह’ ( ऋस. ८।१००।३ ) इति । उ इति पूरणः । सः इन्द्रः विजइव । इवशब्द एवार्थे । उद्वेजक एव सन् अर्यः अरेः सम्बन्धीनि पुष्टीः पोषकाणि

गवाश्वादीनि धनानि आ मिनाति सर्वतो हिनस्ति । तस्मात् श्रदस्मै इन्द्राय धत्त । स इन्द्रोऽस्तीति विश्वासमत्र कुरुत । यद्यप्ययं विशेषतोऽस्माभिर्न दृश्यते तथापि अस्तीति विश्वासं कुरुत । एवं निर्धारणीयमहिमोपेतः सः इन्द्रः नास्तीति । ऋग्भा.

[3]यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॥

यो रध्रस्य समृद्धस्य चोदिता धनानां प्रेरयिता भवति । यः च कृशस्य च दरिद्रस्य च यः च नाधमानस्य याचमानस्य कीरेः स्तोतुः ब्रह्मणः ब्राह्मणस्य च धनानां प्रेरयिता । यः च सुशिप्रः शोभनहनुः सुशीर्षो वा सन् युक्तग्राव्णः अभिषवार्थं युक्तग्राव्णः सुतसोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति सः एव इन्द्रः नास्तीति । ऋग्भा.

यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः ।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः ॥

यस्य सर्वान्तर्यामितया वर्तमानस्य प्रदिशि प्रदेशनेऽनुशासने अश्वासः अश्वा वर्तन्ते । यस्य अनुशासने गावः । यस्य अनुशासने ग्रामाः । ग्रसन्तेऽत्रेति ग्रामा जनपदाः । यस्य आज्ञया विश्वे सर्वे रथासः रथा वर्तन्ते । यः च वृत्रं हत्वा सूर्यं जजान जनयामास । यः च उषसम् । तथा मन्त्रः—‘जजान सूर्यमुषसं सुदंसाः’ ( ऋस. ३।३२।८ ) इति । यः च मेघभेदनद्वारा अपां नेता प्रेरकः, सः इन्द्रः इत्यादि प्रसिद्धम् । ऋग्भा.

यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः ।
समानं चिद्रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः ॥

( १ ) ऋसं. २।१२।४; असं. २०।३४।४.
( २ ) ऋसं. २।१२।५; असं. २०।३४।५.

( १ ) ऋसं. २।१२।६. असं. २०।३४।६.
( २ ) ऋसं. २।१२।७. असं. २०।३४।७.
( ३ ) ऋसं. २।१२।८. असं. २०।३४।८.

ये क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च सेने वा संयती परस्परं सङ्गच्छन्त्यौ यमिन्द्रं विह्वयेते स्वरक्षार्थं विविधमाह्वयतः। परे उत्कृष्टाः अवरे अधमाश्च उभयाः उभयविधाः अमित्राः शत्रवः यमाह्वयन्ति। समानं एकं रथमातिष्ठन्तौ आश्विनौ रथिनौ तमिन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते। यद्वा समानमेकं रथमास्थिताविन्द्राग्नी हवेते यजमानाः यजमानैः पृथगाहूयेते तयोरन्यतरः सः इन्द्रः नास्मीति।

ऋसा.

यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्रः॥

यस्मात् ऋते जनासः जनाः न विजयन्ते विजयं न प्राप्नुवन्ति। अतः युध्यमानाः युद्धं कुर्वाणा जनाः अवसे स्वरक्षणाय यं इन्द्रं हवन्ते आह्वयन्ति। यः च विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिः अभवत्। यः च अच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता, सः इन्द्रः इत्यादि प्रसिद्धम्।

ऋसा.

यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः॥

यः महि महत् एनः पापं दधानान् शश्वतः बहून् अमन्यमानान् आत्मानमजानतः इन्द्रमपूजयतो वा जनान् शर्वा, शृणाति शत्रूननेनेति शरुर्वज्रः, तेनायुधेन जघान। यः च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्यां उत्साहनीयं कर्म नानुददाति न प्रयच्छति। यः च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः, सः इन्द्रः इत्यादि पूर्ववत्।

ऋसा.

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः॥

(१) ऋसं. २।१२।९; असं. २०।३४।९.
(२) ऋसं. २।१२।१०; असं. २०।३४।१०.
(३) ऋसं. २।१२।११; असं. २०।३४।११.

यः पर्वतेषु क्षियन्तं इन्द्रभिया बहून् शरदः संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्तं शम्बरं एतन्नामकं मायाविनमसुरं च चत्वारिंश्यां शरदि चत्वारिंशे संवत्सरे अन्वविन्दत् अन्विष्य अलभत। यः च ओजायमानं बलमाचरन्तं अहिं आगन्तारं दानुं दानवं शयानं शम्बरमसुरं जघान हतवान्। सः इन्द्रः नास्मीति।

ऋसा.

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून्।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः॥

यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्याः रश्मयो यस्य। ते च रश्मयः 'वराहवः स्वतपसः। विद्युन्महसो धूपयः। सापयो गृहमेधाश्चेत्येते। ये चेमेऽशिमिविद्विषः। पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिः' (तैआ. १।९।८५) इति तैत्तिरीयारण्यके आम्नाताः। वृषभः वर्षकः तुविष्मान् वृद्धिमान् बलवान् वा सप्त सर्पण-स्वभावान् सिन्धून् अतः सर्तवे सरणाय अवासृजत् अव-सृष्टवान्। यद्वा गङ्गाद्याः सप्त मुख्या नदीरसृजत्। यः च वज्रबाहुः सन् द्यां दिवं आरोहन्तं रौहिणं असुरं अस्फुरत् जघान।

ऋसा.

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः॥

अस्मै इन्द्राय द्यावा पृथिवी। इतरेतरापेक्षया द्विवचनं 'प्र मित्रयोर्वरुणयोः' (ऋसं. ५।६६।१) इतिवत्। नमेते स्वयमेव प्रह्वीभवतः। चित् अपि च अस्य इन्द्रस्य शुष्मात् बलात् पर्वताः भयन्ते बिभ्यति। यः सोमपाः सोमस्य पाता निचितः सर्वैः। यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः। वज्रबाहुः वज्रसदृशबाहुः। यः च वज्रहस्तः वज्रयुक्तः, सः इन्द्रः इत्यादि प्रसिद्धम्।

ऋसा.

(१) ऋसं. २।१२।१२; असं. २०।३४।१३; जैउब्रा. १।२९।७, ८.

(२) ऋसं. २।१२।१३; असं. २०।३४।१४.

असुर जघान घातयामास । यश्च एवंविधेषु असाधारणेषु व्यापारेषु एकवीरः असाधारणः शूरो भवति । स जनास इन्द्र इति उक्तार्थः ।                                                    असा.

सोमोत्पादननदीप्रवर्तनादिकर्ममहिम्ना प्रशस्यः

ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।
तदाहना अभवत्पिप्युषी पयोऽशोः पीयूषं प्रथमं तदुक्थ्यम् ॥

ऋतुर्वर्षाख्यः कालः जनित्री सोमस्य जनयित्री जननी भवति । तस्याः परि तस्या जनन्याः सकाशात् जातः सोमः अपः उदकानि मक्षु शीघ्रं आविशत् । यासु अप्सु सोमः वर्धते ता [illegible] । तस्यास्वप्सु प्रविष्टः सन् सोमः [illegible] भवति । [illegible] च मन्त्रान्तरे [illegible] (ऋसं. ९।७४।५) इति । सा च [illegible] सोम [illegible] पयः सारभूत पिप्युषी वर्धयन्ती अभवत् । [illegible] सोमलतायाः पीयूषं [illegible] पयः उदकं [illegible] हविरिन्द्रस्य भवति ।

ऋसा.

सध्रीमा यन्ति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् ।
समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥

सध्रीः सध्रीचीनाः पयः उदकं परि परितः बिभ्रतीः बिभ्राणाः ई एता नद्यः आ यन्ति सर्वतो गच्छन्ति । ता नद्यः विश्वप्स्न्याय विश्वसामप्स्न्याय आश्रयभूताय समुद्राय भोजनम् । भुज्यते इति भोजनं पयः । प्र भरन्त प्रकर्षेण संपादयन्ति । कुत एतत् तदाह—प्रवता प्रवणवता निम्नगानां पयसा अनुष्यदे अनुस्यन्दनीयः अध्वा मार्गः समानः एकः हि । यस्ता तानि सोमोत्पादननदीप्रवर्तनादीनि कर्माणि प्रथमं प्र [illegible] अकृणोः अकरोः । सः तादृशमहिमोपेतस्त्वं उक्थ्यः असि भवसि प्रशस्यो भवसि ।

ऋसा.

सर्वेषां पृथक्कर्मकर्तॄणां कारयिता, प्रजानां धनविभागनियामकः, अन्नभोक्तृत्वप्रयोजकश्चेति प्रशस्यः

अन्वेको वदति यद्दाति तद्रूपा मिनन्तदपा एक ईयते ।
विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥

यजमानः [illegible] । [illegible]

ऋसा.

प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते ।
असिन्वन्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥

[illegible] पुष्टिं [illegible] पोषकं धनं [illegible] प्रजाभ्यः विभजन्तः [illegible] विभागं कुर्वन्तः गृहमेधिनः आसते [illegible] निवसन्ति । तत्र [illegible] प्रभवन्तं [illegible] धनं यथा विभज्य प्रय- च्छन्ति तद्वत् । असिन्वन् [illegible] लोके पितुः पालयिता [illegible] भोजनं उदरं [illegible] दंष्ट्रैः दन्तैः [illegible] यथा असिन्वन् [illegible] यजमानस्य [illegible] भोजनं [illegible] रूपत्वात् [illegible] । [illegible] अकृणोः इत्यादि सिद्धम् ।                                                    ऋसा.

भक्तानुग्राहकः, विश्वेश्वरः, पृथिवीनदीसूर्यवनस्पत्योषधिकर्मकारीप्रवर्तकः, दानवहन्ता, धनाजयिति प्रशस्यः

अधाकृणोः पृथिवीं संदृशे दिवे यो धौतीनामहिहन्नारिणक्पथः ।

(१) ऋसं. २।१३।१; गोब्रा. २।४।१७.
(२) ऋसं. २।१३।२.

(१) ऋसं. २।१३।३. (२) ऋसं. २।१३।४.
(३) ऋसं. २।१३।५.

तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा अजनन्त्सास्युक्थ्यः ॥

हे इन्द्र अध अपि च त्वं दिवि द्योतमानाय सूर्याय पृथिवीं चलितामसीं दृढीकृत्य सदृशे सदर्शनीयां अकृणोः अकरोः। यः च त्वं धावतीनां चलन्तीनां नदीनां पथः मार्गान् अरिणाः व्यसर्जयः। गन्तुं योग्यानकरोरित्यर्थः। अग्निं न अर्वन्तमश्वं सैन्धवं वा इत्थं इन्द्र देवाः स्तोतारः तादृशं देवं त्वां स्तोमेभिः स्तोत्रैः अजनन् अवर्धयन्। तत्र दृष्टान्तः। उदभिर्न वाजिनम्। यथा वाजिनमश्वमुदकैर्वर्धयन्ति तद्वत्। शेषं सिद्धम्।

ऋसा.

[1]यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं मधुमद्दुदोहिथ।
स शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशिषे सास्युक्थ्यः ॥

हे इन्द्र यः त्वं भोजनम्। भुज्यत इति भोजनम् अन्नादि। च दयसे यजमानेभ्यः प्रयच्छसि। किंच वर्धनं वृद्धिकरं धनं बलं वा दयसे। तथा आर्द्रात् काण्डात् शुष्कं अनार्द्रं व्रीह्यादिकं मधुमत् मधुरसोपेतं दुदोहिथ दुग्धवानसि। सः तादृशस्त्वं विवस्वति ते परिचरणं कुर्वाणे यजमाने शेवधिं धनसदनं नि दधिषे निदधासि। किंबहुना। विश्वस्य सर्वस्य जगतः एकः अद्वितीय एव सन् ईशिषे स्वामी भवसि। सः इत्यादि सिद्धम्।

ऋसा.

[2]यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्यवनीरधारयः।
यश्चासमा अजनो दिद्युतो दिव उरुरूर्वा अभितः सास्युक्थ्यः ॥

हे इन्द्र यः त्वं पुष्पिणीः पुष्पवतीः च प्रस्वः प्रसूताः प्रसूयमाना वा अवनीः ओषधीरोषधीः दाने अधि। उप्यन्ते सस्यान्यत्रेति दानं क्षेत्रम्। तस्मिन् अधि धर्मणा सकललोकधारणेन कर्मणा वि अधारयः व्यदधाः।

यः त्वं दिवः द्योतमानस्य सूर्यस्य असमाः विषमा नानाप्रकाराः दिद्युतः दीप्तीः अजनः अजनयः। यद्वा दिवो नक्षत्राणि। यः च उरुः महांस्त्वं अभितः सर्वतः ऊर्वान् मरुतः प्राणिनिकायान् पर्वतान् वा अजनयः। शिष्टं स्पष्टम्।

ऋसा.

[3]यो नार्मरं सहवसुं निहन्तवे पृक्षाय च दासवेशाय चावहः।
ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत्सास्युक्थ्यः ॥

पुरुकृत पुरूणां कर्मणां कर्तः हे इन्द्र यः त्वं नार्मरम्। नॄन् मनुष्यान् मारयतीति नृमरः कश्चिदसुरः। तस्यापत्यं नार्मरः तम्। सहवसुम्। वसुना सह वर्तत इति सहवसुः। असुरनामैतत्। एतन्नामकमसुरं निहन्तवे निहन्तुं ऊर्जयन्त्याः बलवत्या वज्रधारायाः अपरिविष्टं मरुदादिभिरव्याप्तम् आस्यं अत्र एव अवहः तमसुरं प्रापयः। यद्वा ऊर्जयन्त्याः विशालकायाया आस्यं प्रापयः। किमर्थम्। पृक्षाय तव हविर्लक्षणान्नलाभाय। दासवेशाय दासानां दस्यूनां वेशाय विनाशाय च। यद्वा अस्माकमन्नलाभाय दस्युविनाशाय च।

ऋसा.

[1]शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध चोदमाविथ।
अरज्जौ दस्यून्त्समुनब्दभीतये सुप्राव्यो अभवः सास्युक्थ्यः ॥

हे इन्द्र एकस्य एकाकिनः श्रेष्ठस्य वा यस्य ते श्रुष्टौ सुखनिमित्ते रथस्य शतं दश दश शतानि हरयो वाहनार्थं भवन्ति। तथा च मन्त्रवर्णः—'इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' ( ऋसं. ६।४७।१८ ) इति। अपि च यश्च आ अग्रः मेधया सर्वत उपजीव्यः। 'न तमश्नुवन्ति ये नाग्रादनं नापुः' इति श्रुतिः। यद्वा यश्च त्वं चोदः स्तोतॄणां प्रेरकः यजमानं आविथ रक्षितवानसि। किंच यस्त्वं अरज्जौ रज्जुरहिते बन्धनागारे दस्यून् उपक्षपयितॄन् दभीतये। दभीतिर्नाम कश्चिदृषिः। तदर्थं समुनप् निबद्धवानसि। किंच सुप्राव्यः सुखेन सर्वैरुपसर्पणीयः अभवः। शिष्टं सिद्धम्।

ऋसा.

[2]विश्वेदनु रोधना अस्य पौंस्यं ददुरस्मै दधिरे कृत्नवे धनम्।

(१) ऋसं. २।१३।६. (२) ऋसं. २।१३।७.

(१) ऋसं. २।१३।८. (२) ऋसं. २।१३।९.
(३) ऋसं. २।१३।१०.

पप्रथच्च एना भूमिमप्रथयत् । सोमस्य मदे एषु सत्सु सति तानीमानि कर्माणि इन्द्रश्चकार । ऋभा.

**सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् ।**
**वृथाऽसृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥**

सद्मेव यथा सद्मगृहाणि मानैः षट्त्रिंशत्प्रक्रमप्राचीवंशरूपैः परिमाणैः प्राग्वंशान् कुर्वन्ति तद्वत् सर्वान् लोकान् वाऽनुजुन्या मानैः परिमाणैः प्राचः प्रागभिमुखान् विमिमाय इन्द्रो विशेषेण निर्मितवान् । तथा नदीनां खानि निर्गमनद्वाराणि वज्रेण च आयुधेन अतृणत् । तथा च मन्त्रः—'इन्द्रो अस्मा अरदद्वज्रबाहुः' ( ऋम. ३।३३।६ ) इति । तथा दीर्घयाथैः बहुकालगन्तव्यैः पथिभिः मार्गैः वृथा असृजत् अनायासेन ताः नदीः सृष्टवान् । सोमस्य इति मिद्राथ इति । ऋभा.

स्वेनजगा विश्वव्यापकः, स्वमायया विश्वनियन्ता च

**अधा यो विश्वा भुवनाभि मज्मनेशानकृत्प्रवया अभ्यवर्धत ।**
**आद्रोदसी ज्योतिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥**

अध अपि च प्रवयाः प्रवृद्धान्नः पुरातनो वा यः इन्द्रः विश्वा भुवना सर्वान् लोकान् मज्मना बलेनाभि भूय ईशानकृत् आत्मानं सर्वस्याधिपतिं कुर्वन् । यद्वा अग्न्यादीन् देवान् तत्तल्लोकाधिपतीन् कुर्वन् अभ्यवर्धत सर्वतः प्रवृद्धोऽभवत् । आत् अनन्तरं वह्निः जगतो वोढा स इन्द्रः ज्योतिषा तेजसा रोदसी द्यावापृथिव्यौ आततान व्याप्तवान् । किञ्च तमांसि तमोरूपाणि रक्षांसि दुधिता दुःस्थितानि दुर्गतानि सीव्यन् विनाशयन् समव्ययत् अवृणोत् । जगदन्धकारं निरवारयदित्यर्थः । ऋभा.

**स प्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः ।**
**अधारयत्पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥**

सः इन्द्रः प्राचीनान् इतस्ततः प्रकर्षेणाञ्चतो गच्छतः सपक्षान् पर्वतान् ओजसा बलेन दृंहत् पक्षच्छेदं कृत्वा भूमौ दृढीचकार । अचलानकरोदित्यर्थः । अपां मेघाभ्यन्तरस्थितानामुदकानां अपः स्पन्दनलक्षणं कर्म अधराचीनम् । अधः प्रदेशमञ्चति गच्छतीत्यधराचीनम् । तादृशम् अकृणोत् । मेघभेदनं कृत्वाऽपो भूमावपातयदित्यर्थः । किञ्च विश्वधायसं विश्वस्य धात्रीं पृथिवीं बलेन अधारयत । मायया प्रज्ञोपायेन द्यां द्युलोकम् अवस्रसः अवपतनात् अस्तभ्नात् । ऋभा.

**इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे ।**
**दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥**

विश्वे सर्वे देवाः इन्द्रस्य तत्कर्म कर्माणि सुकृता सुकृतानि सुष्ठु निर्मितानि पुरूणि बहूनि व्रतानि धर्मांश्च न मिनन्ति । एतानि सर्वाणि तस्य कर्माणि न हिंसन्ति । किन्त्वनुवर्तन्ते । किञ्च यः इन्द्रः पृथिवीं भूलोकं द्यां द्युलोकम् उत अपि च इमाम् इममन्तरिक्षलोकं च एतांस्त्रीन् लोकान् दाधार । सुदंसाः सुकर्मा शोभनकर्मा सविता सूर्यं लोकप्रकाशकम् आदित्यम् उषसम् अग्निहोत्रादिकर्मनिर्वाहकम् उषःकालं जजान उत्पादयामास । ऋभा.

सर्वरूपधरः सर्वगश्च

**रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम् ।**
**त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥**

मघवा धनवानिन्द्रः रूपंरूपं यद्यद्रूपं कामयते तत्तद्रूपं बोभवीति भृशं प्राप्नोति । तत्तद्रूपात्मको भवति । नत्र कारणमुच्यते । मायाः अनेकरूपग्रहणसामर्थ्योपेताः कृण्वानः कुर्वाणः स्वां तन्वं स्वकीयां तनूं, परि पञ्चम्यर्थे, स्वस्मात् शरीरान्नानाविधानि शरीराणि निर्मिमीते । यद्वा स्वां तनूं नानाविधरूपोपेतां करोति । तथा च मन्त्रान्तरः—'इन्द्रो मायाभिः पुरुरूपः' ( ऋम. ६।४७।

(१) ऋसं. २।१५।३. (२) ऋसं. २।१७।४. (३) ऋसं. २।१७।५.

(१) ऋसं. ३।३२।८. (२) ऋसं. ३।५३।८; जैउब्रा. १।४४।६, ७.

तीक्ष्णीकरोति । तथा तव त्वदीयं शुष्मं शोषकं बलं उत । अपि च क्रतुं प्रज्ञानं बलं कर्म वा वरेण्यं वरणीयं वज्रं आयुधं च स्तुतिस्तीक्ष्णीकरोति । ऋभा.

द्युपृथिवीविष्णुमित्रवरुणाः तद्यशः कीर्तयन्ति

[1]तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः ।
त्वामापः पर्वतासश्च हिन्विरे ॥

हे इन्द्र तव त्वदीयं पौंस्यं बलं द्यौः वर्धति वर्धयति । त्वदीयं श्रवः यशः पृथिवी वर्धयति । त्वा त्वां आपः उदकानि अन्तरिक्षाणि पर्वतासः पर्वताः पर्ववन्तो मेघाः च गिरयश्च वा हिन्विरे प्रीणयन्ति स्वामित्वेन प्राप्नुवन्ति वा । ऋभा.

[2]त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः ।
त्वां शर्धो मदत्यनु मारुतम् ॥

हे इन्द्र बृहन् महान् क्षयः निवासहेतुः विष्णुः मित्रः वरुणः च त्वां गृणाति स्तौति । तथा मारुतं मरुत्सम्बन्धि शर्धः बलं त्वा अनु मदति तव मदमनुलक्ष्य पश्चान्मादयति । त्वामनुमादयति वा । ऋभा.

दातृतमः, असहाय एव असुरहन्ता, सर्वप्रशंसाना सर्वप्रशस्तानां च एक एवाधिकरणम्

[3]त्वं वृषा जनानां मंहिष्ठ इन्द्र जज्ञिषे ।
सत्रा विश्वा स्वपत्यानि दधिषे ॥

हे इन्द्र वृषा वर्षिता त्वं जनानां देवजनानां मध्ये मंहिष्ठः दातृतमः जज्ञिषे प्रादुर्भवसि । अत एव विश्वा सर्वाणि स्वपत्यानि शोभनैः पुत्रादिभिः सहितानि सत्रा सह दधिषे दानु धारयसि ददासि वा । ऋभा.

[4]सत्रा त्वं पुरुष्टुत एको वृत्राणि तोशसे ।
नान्य इन्द्रात्करणं भूय इन्वति ॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र त्वं एकः असहाय एव सन् सत्रा । सत्यमेतत । महान्ति वृत्राणि शत्रुजातानि । यद्वा । सत्रेति सहार्थे । सहैव युगपदेवैकयत्नेनैव तोशसे हिनस्सि । तोशतिर्वधकर्मा । अकर्तुं शक्नोतीति भावः । अपि चास्मात् इन्द्रात् अन्यः कश्चिन् भूयः बहुतरं करणं कर्म वृत्रवधादिकं न इन्वति न प्राप्नोति । इन्द्र एव कर्तुं शक्नोतीति भावः । ऋभा.

(१) ऋसं. ८।१५।८; असं. २०।१०६।२; सासं. २।१७।३. (२) ऋसं. ८।१५।९; असं. २०।१०६।३; सासं. २।१७।३. (३) ऋसं. ८।१५।१०. (४) ऋसं. ८।१५।११.

[1]यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या ।
अपामवो न समुद्रे ॥

यस्मिन् इन्द्रे उक्थानि शस्त्राणि रण्यन्ति रमन्ते विश्वानि सर्वाणि श्रवस्या श्रवस्यानि श्रवणीयानि हविर्लक्षणान्यन्नानि च रमन्ते । तत्र दृष्टान्तः । समुद्रे उदधौ अपां उदकानां अवो न । अवति गच्छतीत्यवस्तरङ्गजातम् । तद्यथा समुद्रेऽन्तर्भवति तथा रण्यन्तीत्यर्थः । ऋभा.

[2]इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्रः पुरू पुरुहूतः ।
महान्महीभिः शचीभिः ॥

अयं इन्द्रः ब्रह्मा परिवृढः सर्वेभ्योऽधिकः । स एव इन्द्रः ऋषिः द्रष्टा सर्वस्यार्थजातस्य । सः इन्द्रः पुरु बहुल पुरुहूतः बहुभिराहूतश्च महीभिः महतीभिः शचीभिः क्रियाभिर्वृत्रवधादिरूपाभिः महान् प्रभूतो भवति । ऋभा.

[3]स स्तोम्यः स हव्यः सत्यः सत्वा तुविकूर्मिः ।
एकश्चित्सन्नभिभूतिः ॥

सः पूर्वोक्त इन्द्रः स्तोम्यः स्तोमार्हः स्तुत्यर्हः । स एव हव्यः ह्वातव्यश्च सत्यः सत्सु साधुरवितथस्वभावो वा सत्वा शत्रूणामवसादयिता तुविकूर्मिः बहुकर्मा । यत एवमतः कारणात् एकश्चित्सन् असहायोऽपि सन् अभिभूतिः शत्रूणामभिभविता तिरस्कर्ता भवति । ऋभा.

[4]तमर्केभिस्तं सामभिस्तं गायत्रैश्चर्षणयः ।
इन्द्रं वर्धन्ति क्षितयः ॥

चर्षणयः द्रष्टारो मन्त्राणां क्षितयः मनुष्याः तं इन्द्रं अर्केभिः अर्चनसाधनैर्यजूरूपैर्मन्त्रैः वर्धन्ति वर्धयन्ति । तथोद्गातारः सामभिः गानविशिष्टैर्मन्त्रैः तं वर्धयन्ति । तथा गायत्रैः गायत्र्यादिच्छन्दोयुक्तैः शस्त्ररूपैरप्रगीतैर्मन्त्रैः तं एव इन्द्रं होतारो वर्धयन्ति । ऋभा.

(१) ऋसं. ८।१६।२; असं. २०।४४।२. (२) ऋसं. ८।१६।७. (३) ऋसं. ८।१६।८. (४) ऋसं. ८।१६।९.

देवताः । इन्द्रमन्यन्याः ।' (तैब्रा. ३।७।१।८) इति । अतो महान् सर्वाधिकोऽसि । ऋमा.

[1]विभ्राजञ्ज्योतिषा स्वरगच्छो रोचनं दिवः ।
देवास्त इन्द्र सख्याय येमिरे ॥

हे इन्द्र त्वं ज्योतिषा तेजसा दिवः आदित्यस्य रोचनं प्रकाशकमधिकरणत्वेन स्वः स्वर्गं विभ्राजन् प्रकाशयन् अगच्छः प्राप्नोः । किंच देवाः सर्वे ते तव सख्याय मित्रत्वाय येमिरे स्वं स्वमात्मानं नियमितवन्तः । अस्माकमिन्द्रः सखा यथा स्यादिति सर्वे देवाः प्रयत्नमकार्षुरित्यर्थः । ऋमा.

[2]एन्द्र नो गधि प्रियः सत्राजिदगोह्यः ।
गिरिर्न विश्वतस्पृथुः पतिर्दिवः ॥

हे इन्द्र प्रियः प्रियतमः सत्राजित् सदा जेता अगोह्यः केनापि गोहितुमशक्यः गिरिर्न पर्वत इव विश्वतः सर्वतः पृथुः पृथुतमः दिवः स्वर्गस्य पतिः ईदृशस्त्वं नः अस्मान् आ गधि आ गच्छ । ऋमा.

[3]त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ।
अधा ते सुम्नमीमहे ॥

हे वसो वासयितः शतक्रतो बहुकर्मन्निन्द्र त्वं नः अस्माकं पिता पितृवत्पालकः बभूविथ भव । त्वं माता मातृवद्धारकश्च बभूविथ । अध अथ च वयं ते तव त्वभूतं सुम्नं सुखं ईमहे याचामहे । ऋमा.

स स्तोतव्यः यदि सत्यः

[4]प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति ।
नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभि ष्टवाम ।

जनाः वाजयन्तः संग्राममिच्छन्तो यूयं इन्द्राय सत्यं सत्यभूतं स्तोमं सु सुष्टु प्र भरत । इन्द्रोऽस्तीत्येतत् यदि सत्यमस्ति भवति । इन्द्रास्तित्वे कः सन्देहः, तत्राह —
नेम उ भार्गवो नेम एव इन्द्रः नाम त्वः कश्चिन्न अस्ति इति आह । तत्र कारणं दर्शयति — क ईं एनमिन्द्रं ददर्श अद्राक्षीत् । न कोऽप्यपश्यत् । अतः कं वयं अभि ष्टवाम अभिस्तुमः । तस्मादिन्द्रो नाम कश्चिद्वि प्रत इति वादमात्रं न तु तत्सत्यमित्यर्थः । ऋमा.

सः सर्वेश्वरत्वेन स्वसत्तां प्रमाणयति

[5]अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना ।
ऋतस्य मा प्रदिशो वर्धयन्त्यादर्दिरो भुवना दर्दरीमि ॥

एवं नेमस्योक्तिमाकर्ण्य इन्द्रः स्वयं समीपमाजगाम । आगत्य चात्मानमनेन ऋचेन स्तौति । हे जरितः स्तोतः अयं अहं अस्मि । इह तव समीपे स्थितं मा मा पश्य । विश्वा सर्वाणि जातानि भुवनानि मह्ना महत्त्वेन अभ्यस्मि अभिभवामि । किंच मां ऋतस्य सत्यस्य यज्ञस्य वा प्रदिशः प्रदेष्टारो विद्वांसः स्तोत्रैः वर्धयन्ति । अपि च आदर्दिरः आदरणशीलोऽहं भुवना भुवनानि शत्रुभवनानि दर्दरीमि भृशं विदारयामि । ऋमा.

[6]आ यन्मा वेना अरुहन्नृतस्यँ एकमासीनं हर्यतस्य पृष्ठे ।
मनश्चिन्मे हृद आ प्रत्यवोचदचिक्रदञ्छिशुमन्तः सखायः ॥

यत् यदा ये ऋतस्य यज्ञस्य रक्षा वेनाः कामयमानाः हर्यतस्य कान्तस्यान्तरिक्षस्य पृष्ठे आसीनं उपरि एकं मा मां आ अरुहन् तदानीं तेषां भवतामागतं मनश्चित् मन एव मे मम हृदे हृदयाय प्रत्यवोचत् अब्रवीत् । अचारिणं च तत्राह्वानं शिशुमन्तः पुत्रवन्तः सखायः प्रियाः अमी अचिक्रदन् मां क्रन्दन्तीति । ऋमा.

[7]अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥

अहमिन्द्रः वसुनः धनस्य पूर्व्यः मुख्योऽसाधारणः पतिः

(१) ऋसं. ८।९८।३; असं. २०।६२।७; सासं. २।६।६. (२) ऋसं. ८।९८।४; असं. २०।६४।१; सासं. १।४।५, २।९।८ प्रियः (प्रिय) गोह्यः (गोह्य); ताब्रा. १४।१२।२. (३) ऋसं. ८।९८।११; असं. २०।१०८।२, सासं. २।८।६ अधा (अथा). (४) ऋसं. ८।१००।३. (५) ऋसं. ८।१००।४. (६) ऋसं. ८।१००।५. (७) ऋसं. १०।४८।१; ऐब्रा. २४।२।६; शाब्रा. २२।४,२६।१६.

स्वामी भव अभवम् । तथा अहं शश्वतः । बहुनामैतत् । बहोः शत्रोः सम्बन्धीनि धनानि । समि यकीभावे । सञ्जयामि । किञ्च मामेव जन्तवः प्राणिनो यजमानाः हवन्त आह्वयन्ति । पितरं न पितरमिव पुत्राः । अहं दाशुषे हविषो दात्रे यजमानाय भोजनं अन्नं वि भजामि ददामि ।　　　ऋसा.

मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम् ।
ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च ॥

मह्य मदर्थ त्वष्टा देवः आयसं अयोमयं वज्रं आयुधं अतक्षत् मयादितवान् । देवाः मयि अपि क्रतुं स्वविरोधिहननरूपं कर्म अपि अवृजन समवाययन । मम अनीकं सेनामुखं सूर्यानीकमिव दुष्टरं अन्येन तरीतुमशक्यम् । मामेव कृतेन कर्मणा कर्त्वेन इतः परं कर्तव्येन वृत्रवधादिरूपेण आर्यन्ति गच्छन्ति । आयन्तिर्गतिकर्मा । यद्वा । आर्यमौश्वर्यं कुर्वन्ति ।　　　ऋसा.

अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन ।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥

इन्द्रः सर्वस्य धनस्य स्वामी अहं धनं आत्मीयं न परा जिग्य इत् नैव पराभावयामि । मदीयं धनं न पराभूयत इत्यर्थः । किञ्च अहं मृत्यवे सर्वेषां मारकाय कदा चन कदापि नाव तस्थे नावस्थितो भवामि । इन्द्रभक्ता न मृत्युभाजो भवन्ति किल, किमु वक्तव्यमिन्द्रस्य मृत्युविरहे । यस्मादेवं तस्मात् सोमं सुन्वन्तः हे यजमानाः वसु युष्मदपेक्षितं धनं मा इत मामेव याचत । हे पूरवः मनुष्याः मे सख्ये न रिषाथन मा रिष्टा भवथ । मत्सख्यं मा विनाशयत ।

ऋसा.

अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम् ।
अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे ॥

अहं इन्द्रः गृणते स्तुवते पूर्व्यं मुख्यं वसु धनं दां अदाम् अहमेव ब्रह्म परिवृढं कर्म स्तुतिलक्षणं मह्यं वर्धनं कृणवं करोमि । स्तोतुः सर्वस्य स्तोत्रं तस्मै धनं प्रयच्छन् मह्यमेव वर्धनं करोमीत्यर्थः । तथा अहं यजमानस्य मामुद्दिश्य यष्टुर्धनस्य चोदिता प्रेरकः भुवं भवामि । अयज्वनः अयष्टुः, अयष्टारमित्यर्थः । तं विश्वस्मिन् भरे सर्वस्मिन्नपि संग्रामे साक्षि अभिभवामि ।　　　ऋसा.

मां धुरिन्द्रं नाम देवता दिवश्च ग्मश्चापां च जन्तवः ।
अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे ॥

इन्द्रं नाम इन्द्रनामानं मां देवता देवानां मध्ये दिवः द्युलोकस्य । ग्मा पृथिवी आपः अन्तरिक्षम् । एतेषु लोकेषु जन्तवः जाताः मां मामेव धुः दधुः धारयन्ति नर्विभिः स्तुतिभिश्च । अहं यज्ञगमनाय संग्रामगमनाय वा हरी हरितवर्णौ वृषणा पुंस्त्वोपेतौ विव्रता विविधं भ्रमन्तौ रघू लघू शीघ्रगती अश्वौ नियोजयामि रथे । तथा अहं धृष्णु धर्षकं वज्रमायुधं शवसे बलाय आ ददे स्वीकरोमि

ऋसा.

देवानां रक्षिता, स्वयमकर्ता, मायी च

तां सु ते कीर्तिं मघवन्महित्वा यत्त्वा भीते रोदसी अह्वयेताम् ।
प्रावो देवाँ आतिरो दासमोजः प्रजायै त्वस्मै यदशिक्ष इन्द्र ॥

हे इन्द्र मघवन् धनवन् ते तव सर्वान्धिनो महित्वा महत्त्वेनागतां कीर्तिं सु सुष्ठु कीर्तयामीति शेषः । किञ्च यत् यदा त्वा त्वां प्रति भीते असुरेभ्यः प्राप्ते रोदसी द्यावापृथिव्यौ अह्वयेतां अवेत्यव्रतां तदानीं देवान् प्रावः प्ररक्षः । तथा दासं देवानामुपक्षयकर्तारमसुरं आतिरः व्यनाशयः । असुरान् हत्वा देवानां रक्षणेन द्यावापृथिव्योः भीतिं परिहर इति यदस्ति किञ्च त्वस्मै एकस्मै

(१) ऋसं. १०।४८।३.

(२) ऋसं. १०।४८।५.

(३) ऋसं. १०।४९।१.

(१) ऋसं १०।४९।२.

(२) ऋसं. १०।५४।१; ऐब्रा. २३।४।१; शाब्रा. २६।१२; ऐआ. ५।१।६।१.

एतन्नामकाद्देवः मनः अवाचि उक्तमभवत् । ऋभा.

**दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै ।**

**उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः ॥**

अनया 'चत्वारि ते असुर्याणि नामा' इत्युक्तस्यास्य नाम स्तूयते । हे इन्द्र ते तव तदक्षमाणं नाम सर्वेषां नामकं शरीरं पराचैः पराङ्मुखैर्मनुष्यैः मनुष्याणामित्यर्थः । गुह्यं गोपनीयं अप्रकाशितं सत् दूरे दूरतो विप्रकृष्टे दूरदेशे वर्तते इति शेषः । यत् यदा त्वा त्वां रोदसी द्यावापृथिव्यौ भीते सती अह्वयेतां अंब तन्नाम । किमर्थम् । वयोधै अन्नस्य निधानार्थम् । जगतोऽन्नस्य साधनार्थमित्यर्थः । तदानीं तेन शरीरेणासि । अनितवता मेतत । तव समीप एव पृथिवीं द्यां च उत ऊर्ध्वं परस्परवियुक्तं तथा भवति तथा अस्तम्भाः स्थापितवानसि । किं कुर्वन् । हे मघवन्निन्द्र भ्रातुः पर्जन्यस्य पुत्रान् पुत्रस्थानीयानुदकसंस्पर्शान तित्विषाणः दीपयन् ।

ऋभा.

**महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यम् ।**

**प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च ॥**

हे इन्द्र तव तद्गुह्यं गोपनीयं अन्यैरविज्ञातं पुरुस्पृक् बहुभिर्स्पृहयर्थिभिः स्पृहणीयमाकाशात्मकं नाम शरीरं महदत्यन्तं प्रवृद्धं येन नाम्ना भूतं भव्यं च पूर्वं जनयः उत्पादितवानसि । भूतभव्योभयान्वयाय येनेत्यस्यावृत्तिः स्यात् । आकाशात्मकाद्धि परमेश्वरस्वरूपात् भूतभव्यात्मकं जगदुत्पद्यते । 'आकाशाद्वायुः' (तैउ. २।१) इत्यादिश्रुतेः । किंच प्रत्नं पुराणं पूर्वकालीनं यज्ज्योतिः द्योतमानमादित्याख्यं उदकाख्यं वा अस्य इन्द्रस्य प्रियं प्रियभूतं तत्त्वं जातमुत्पन्नं प्रियाः प्रीयमाणाः पञ्च । पञ्च जना इति शेषः । भीमसेनो भीम इतिवदेकदेशलक्षणा । निषादपञ्चमाः चत्वारो वर्णाः समविशन्त संविशन्ते । स्नानिर्वाहाय भजन्ते इत्यर्थः । ऋभा.

**आ रोदसी अपृणादोत मध्यं पञ्च देवाँ ऋतुशः सप्तसप्त ।**

**चतुस्त्रिंशता पुरुधा वि चष्टे सरूपेण ज्योतिषा विव्रतेन ॥**

अयमिन्द्रः आत्मीयेन शरीरेण तेजसा वा रोदसी द्यावापृथिव्यौ आ सर्वतः अपृणात् पर्याप्नोति । उतापि च मध्यं पृथग्भूतेनाक्षरेणैवा मध्यमं अन्तरिक्षं आपृणादिति वर्तते । तदपि स्वशरीरेण तेजसा वा पूरयति । किंच पञ्च देवान् देवमनुष्यपितृअसुररक्षोगणकान् तथा सप्त सप्त । द्विरुक्त्या सप्तसंख्याकानि तत्त्वानि लोके यानि सन्ति तानि परिगृह्यन्ते । कानि तानीति । सप्त मरुद्गणान् सप्तादित्यरश्मीन् सप्त चेन्द्रियाणि सप्त लोकान् छन्दांस्यपि सप्त सरूपेण तानृतुशः काले काले चतुस्त्रिंशता चतुस्त्रिंशत्संख्याकेन देवगणेन सह पुरुधा बहुप्रकारं वि चष्टे वि पश्यति सर्वदा ईक्षते । अष्टौ वसवः एकादश रुद्रा द्वादश आदित्याः प्रजापतिश्च वषट्कारश्च विराट् चेति चतुस्त्रिंशद्देवानाम् । केनेति तदुच्यते । सरूपेण समान रूपेण ज्योतिषा प्रकाशकेन विव्रतेन विविधेन कर्मणा ।

ऋभा.

सर्वस्याक्षस्थानीयः, ईशानः, योगक्षेमदः, चक्षुषश्चक्षुश्च

**इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात् ।**

**यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥**

इन्द्राय इन्द्रार्थं अनिशितसर्गाः अतनूकृतविसर्गाः उपर्युपरि वर्तमाना याः गिरः स्तुतयः ताभिर्गीर्भिः सगरस्य अन्तरिक्षस्य । 'सगरं समुद्रः' इत्यन्तरिक्षनामसु पाठात् । बुध्नात् प्रदेशात् अपः उदकानि प्रेरयं प्रेरयामि । यः इन्द्रः शचीभिः कर्मभिः पृथिवीं उत अपि च द्यां दिवं चक्रिया रथचक्राणि अक्षेणेव यथा रथाक्षेण तद्वत् विष्वक् सर्वतः तस्तम्भ अस्तभ्नात् ।

ऋभा.

---

(१) ऋसं. १०।५५।१.

(२) ऋसं. १०।५५।२.

(१) ऋसं. १०।५५।३.

(२) ऋसं. १०।८९।४; सासं. १।३।११ प्रेरयं (प्रेरयत्) चक्रिया (चक्रियौ); तैब्रा. २।४।५।२ प्रेरयं (प्रेरयन्).

अन्तरिक्षमभि उद्दीपितः उद्गतः सूर्यात्मा अहं महा-
महोऽस्मि । महतामपि महान् अस्मि । यद्वा । महत्
प्रभूतं महः तेजः यस्य । प्रभूततेजस्कोऽस्मि ।

ऋमा.

**गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः ।**
**कुवित्सोमस्यापामिति ॥**

गृहः हविषां ग्रहीता अरंकृतः यजमानैरलंकृतः अहं
देवेभ्यः इन्द्रादिभ्यः हव्यवाहनः हविषां वोढा प्रार्थयिता
अग्न्या मा मन् यानि हवींषि प्रापयामि । इति तस्मात्
कुवित् बहुवारं सोमस्य सोमं अपां पीतवानस्मि ।
तस्मादेतान्यकार्षं इतीन्द्रः स्वात्मानमेव अस्तावीत् ।

ऋमा.

सूर्यधारक.

**एता त्या ते श्रुत्यानि केवला यदेक एकमकृणोरयज्ञम् ।**
**मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं पिता ॥**

हे इन्द्र त्या तानि ते तव त्वदीयानि वीर्यकर्माणि
एता एतान्येव केवला केवलानि श्रुत्यानि श्रोतव्यानि
स्तुत्यर्हाणि । नान्यदीयानि । कानि पुनस्तानि । एकः
असहायस्त्वं एकं प्रधानभूतं अयज्ञं यज्ञरहितमसुरं
अकृणोः अहिंसीरिति यत् एतदेकं कर्म । तथा मासां
मासानां विधानं विधातारं कर्तारं सूर्यं अधि
द्यवि द्युलोके उपरि अदधाः अधारयः । इदमपरं कर्म ।
तथा पिता पालको द्युलोकः विभिन्नं विदारितं वृत्रादि-
भक्तं प्रधिं रथचक्रस्य पार्श्वम् । पार्श्वफलके प्रधी इत्यु-
च्येते । ईदृशं सूर्यरथसंबन्धिनं प्रधिमन्यैर्धारयितुमशक्यं
त्वया एव भरति धारयति । इदमपरं कर्म । एतत्प्रभृ-
तीनि त्वया कृतानि कर्माणि परस्परमसाधारणानि
सर्वदा स्तोतव्यानीत्यर्थः । ऋमा.

सर्वविभूतिरूपः ईश्वरः

**अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।**
**अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥**

इदमादिमन्त्रत्रयेण गर्भे वसन् वामदेवः उत्पन्नतत्त्व-
ज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्त्रादिरूपेण प्रदर्शय-
न्नाह । अहं वामदेव इन्द्रो वा मनुरभवं सर्वस्य मन्ता
प्रजापतिरस्मि । अहमेव सूर्यश्च सर्वस्य प्रेरकः सविता
चास्मि । विप्रः मेधावी कक्षीवान् दीर्घतमसः पुत्रः
एतत्संज्ञकः ऋषिः अहमेवास्मि । आर्जुनेयं अर्जुन्याः
पुत्रं कुत्सं एतन्नामकमृषिं अहमेव । न्यृञ्जे नितरां प्रसा-
धयामि । कविः क्रान्तदर्शी उशना एतदाख्य ऋषिः
अहमेवास्मि । उक्तमुपलक्षणम् । परमार्थदृष्ट्या कृत्स्नं
सर्वमहमेवास्मीत्यर्थः । हे जनाः मा मां सर्वात्मकं पश्यत ।
यस्मादेवमेव स्वस्वरूपमनुभवतीत्युक्तं भवति ।

ऋमा.

**अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय ।**
**अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥**

अहं वामदेव इन्द्रो वा आर्याय मनवे भूमिं पृथ्वीं
अददां दत्तवानस्मि । दाशुषे हविर्दत्तवते मर्त्याय मनु-
ष्याय यजमानाय वृष्टिं सस्यादिभिवृद्धिकरीं वृष्टिलक्षणमुदकं
अहमेव अददाम् । किञ्च अहं वावशानाः शब्दायमानाः
अपः उदकानि अनयं सर्वमपि प्रदेशं अगमयम् । देवाः
बहवः देवाः मम केतं मदीयं संकल्पं अनु आयन्
अनुयन्ति ।

ऋमा.

**अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥**

अहं वामदेव इन्द्रो वा मन्दसानः सोमेन माद्यन् नव
नवसंख्याकाः नवतीः नवतिसंख्याकाश्च शम्बरस्य एतन्ना-
मकस्यासुरस्य संबन्धीनि पुरः पुराणि साकं युगपदेव व्यैरं
अध्वंसयम् । शततमं शतसंख्यापूरणं पुरं वेश्यं दिवो-
दासनाम्ने प्रवेशार्हमकरवम् । सर्वताता सर्वतातौ यज्ञे
अतिथिग्वं आतिथीनामभिगन्तारं दिवोदासं दिवोदास-

(१) ऋसं. १०।११९।१२. (२) ऋसं. १०।१३८।६.
(३) ऋसं. ४।२६।१ शब्रा. १४।४।२।२२; बृउ. १।४।१०.

(१) ऋसं. ४।२६।२. (२) ऋसं. ४।२६।३.

अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः । 'पुरुषे ह वा अयमादितः' इति खण्डे 'गर्भ एवैतच्छयानो वामदेव एवमुवाच' (ऐआ. २।५।१) इत्यादिना अयमर्थः सम्यक् प्रतिपादितः ऋमा.

न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण ।
ईर्मा पुरंधिरजहादरातीरुत वाताँ अतरच्छूशुवानः ॥

सः गर्भः मां वामदेवं जोषं पर्याप्तं न घ नैव अप जभार अपजहार । गर्भेऽपि वसतो मे मोहो नाभूदित्यर्थः । अहं तु ईं इदं गर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येन अभि आस अभ्यभवम् । ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरां धारकः परमात्मा अरातीः गर्भसंश्रितान् शत्रून् अजहात् अत्यजत् जघान । उत अपि च शूशुवानः वर्धमानः परिपूर्णः परमात्मा वातान् गर्भदुःखकरान् वायून् अतरत् अतारीत् । ऋमा.

अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिम् ।
सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन् ॥

अथ तदानीं सोमाहरणकाले यत् यदा श्येनः द्योः द्युलोकात् अव अस्वनीत् अवाङ्मुखः शब्दमकरोत् । यदि वा यदा च । वेति चार्थे । यत् यं पुरंधिं सोमं अतः अस्मात् श्येनात् वि ऊहुः सोमपाला विक्षिप्तवन्तः । यत् यदा अस्ता शराणां क्षेप्ता मनसा मनोवेगेन भुरण्यन् गन्तुमिच्छन् कृशानुः एतन्नामकः सोमपालः ज्यां धनुषः कोटौ मौर्वीं क्षिपन् ह चिक्षेप खलु । अस्मै श्येनाय शरं अव असृजत् त्यक्तवान् । तथा च ब्राह्मणं– 'तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत्' (ऐब्रा. ३।२६) इत्यादि । यदा सोमपाला इत्थमित्थं चक्रुः तदा श्येनः सोममाजहारेत्युत्तरया सम्बन्धः । ऋगा.

ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः ।
अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥

ऋजिप्यः ऋजुगामी श्येनः इन्द्रवतः इन्द्रो रक्षको यस्य तस्मात् बृहतः महतः अधि उपरि ष्णोः स्थितात् द्युलोकात् ईं एनं सोमं जभार आजहार । तत्र दृष्टान्तः । इन्द्रवतः, इन्द्रः समर्थः तद्वतो देशात् भुज्युं न भुज्युनामकं राजानं यथा अश्विनौ आजह्रतुस्तद्वत् । अध तदानीं यामनि युद्धे प्रसितस्य कृशानोरस्त्रैर्बद्धस्य वेः गन्तुः अस्य श्येनस्य अन्तः मध्ये स्थितं पतत्रि पतनशीलं तत् पर्णं पतत् अपतत् । ऋमा.

अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः ।
अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत्पिबध्यै शूरो मदाय प्रति धत्पिबध्यै ॥

अध अधुना शूरः विक्रान्तः मघवा धनवान् इन्द्रः श्वेतं शुभ्रं कलशं कलशे पात्रे स्थितं गोभिः गव्येन पयसा अक्तं सिक्तं आपिप्यानं आप्याययन्तं शुक्रं सारोपेतं अध्वर्युभिः प्रयतं दत्तं अन्धः सोमलक्षणमन्नं मध्वः मधुरस्य सोमरसस्य अग्रं अग्रे मदाय सदाय पिबध्यै पातुं प्रति धत् प्रतिदधातु । पुनरुक्तिरादरार्था । ऋमा.

सर्वेश्वरः, सर्वात्मा, सर्वरूपः, मातृपितृस्वरूपः

इन्द्रो भूतस्य भुवनस्य राजेन्द्रो दाधार पृथिवीमुतेमाम् ।
इन्द्रे ह विश्वा भुवना श्रितानीन्द्रं मन्ये पितरं मातरं च ॥
इन्द्रः पृणन्तं पपुरिं चेन्द्रा इन्द्रः स्तुवन्तं स्तवितारमिन्द्रः ।
दधाति शक्रः सुकृतस्य लोक इन्द्रं मन्ये पितरं मातरं च ॥
इन्द्रो द्यौरुर्व्युत भूमिरिन्द्रा इन्द्रः समुद्रो अभवद्गभीरः ।
उर्वन्तरिक्षं स जनासा इन्द्रा इन्द्रं मन्ये पितरं मातरं च ॥
इन्द्रो वृत्रं वज्रेणावधीद्धीन्द्रो व्यंसमुत शुष्णमिन्द्रः ।

(१) ऋसं. ४।२७।२. (२) ऋसं. ४।२७।३.
(३) ऋसं. ४।२७।४.

(१) ऋसं. ४।२७।५.
(२) मैसं. ४।१४।७. (१२-१७).

इन्द्रः पुरः शम्बरस्याभिनद्धीन्द्रं मन्ये पितरं मातरं च ॥
इन्द्रो बभूव ब्रह्मणा गभीर इन्द्रा आभृतः परि भूष्विन्द्रः ।
इन्द्रो भविष्यदुत भूतमिन्द्रा इन्द्रं मन्ये पितरं मातरं च ॥
इन्द्रोऽस्मं अवतु वज्रबाहुरिन्द्रं भूतानि भुवनानीन्द्रं ।
अस्माकमिन्द्रो भवतु प्रसाह इन्द्रं मन्ये पितरं मातरं च ॥

अकर्ता, माया

तस्मादेतदृषिणाऽभ्यनूक्तम् । न त्वं युयुत्से कतमच्च नाहर्न तेऽमित्रो मघवन् कश्चनास्ति । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रून्न नु पुरा युयुत्स इति × ॥

उक्तार्थदाढर्च्याय ऋचमपि संवादयति—तस्मादेतदृषिणा अभ्यनूक्तमिति । ऋषिर्मन्त्रः । स च 'न त्वं युयुत्से' इत्यादिका ऋक् । हे इन्द्र त्वं न युयुत्से युद्धं न कृतवान् । त्वत्प्रतिभटानामसुराणामभावात् । कतमच्च किमपि शत्रुसैन्यं नाहः नावधीः । हे मघवन्निन्द्र ते तव प्रकृत्या अमित्रः शत्रुः कश्चन कोऽपि नास्ति । वृत्रादिभिरसुरैः सह यानि तव युद्धान्याहुः सा मायैव, इच्छब्दोऽवधारणे, तत् मायामात्रं, न पारमार्थिकम् । तत् कुत इति चेत्, उच्यते । अद्य अस्मिन्काले पुरा पूर्वकालेऽपि त्वं शत्रून् न युयुत्से न प्रहृतवानसि । शङ्कराभा. *

× शेषं विश्वसृष्टिप्रकरणे द्रष्टव्यम् ।

'कया शुभा सुवयसा' ( ऋसं. १।१६५ ) 'असत् सु मे' ( ऋसं. १०।२७ ) इत्येते सूक्ते सायणाचार्येण परमात्मप्रजापतिपरतया व्याख्याते, परन्तु तादृशार्थस्य स्पष्टमप्रतिभानात् नात्र संगृहीते ।

इन्द्रस्य परमात्मत्वस्य-ञ्जकविशेषणानि अस्मिन प्रकरणेऽसंगृहीतवचनान्तरेष्वपि समुपलभ्यन्ते । यथा—

अभिभूः ऋसं. २।२१; ८।१६, ८९, ९७; १०।१५३.
अमर्त्यः-ऋसं. १।१२९, १७५; ३।५१.
अमृतः-ऋसं. ५।३१, ६।२१; ७।२०.

(१) शब्रा. ११।१।६।१०.

अविता नृणां सखीयतां स्तोस्तृणां च- ऋसं. ४।१७, ३१, ६।४४; ७।१९, ८।२,४६, १०।२४.

ईशानः, एकराट अस्य जगत - ऋसं. १।१००, ७।३२, ८।६, १७, ३२, ३७, ४०, ४६, ५३, ६८, ७६, ८१.

ऋतस्य जनक रक्षक अधिष्ठानं च-ऋसं. २।३०, ३।५३; ७।२०; ८।६, ७०.

ऋतस्य सदसः धाति -ऋसं १०।१११.

ज्योतिष कर्ता ऋस. ८।१६.

पितृणां कर्ता - ऋसं. ४।१७.

विश्वस्य कर्मण धर्ता- ऋसं. १।११.

कवितम कवीनाम्- ऋसं. ६।१८.

कृष्टीनां राजा- ऋसं. १।११७, ४।१७, ६।४५.

चर्षणीनां राजा वृषभो वा सम्राट वा धर्ता वा- ३।३७, ५१, ४।१७ ६।१८, ७।२३ ८।१६, ७०, ९६. १०।८९.

जनानां पतिः विश्वस्य जगतश्च- ऋसं. १।१०१, ६।३४, ४५, ८।१३.

जनानां राजा-ऋस. ८।६४.

जनुषां राजा-ऋस. ४।१७.

जनिता दिव. पृथिव्या. सूर्यस्य च-ऋसं. ३।४९, ८।३६.

ज्येष्ठतमः- ऋसं. २।१६.

ज्येष्ठराज - ऋसं. ८।१६.

दमिता विश्वस्य- ऋसं ५।३४.

दिवस्पतिः- ऋसं. ८।१३, ९८.

देवतमः- ऋसं. ४।२२.

देवः देवस्य- ऋसं. ८।९२; १०।२२.

धर्ता दिवः रजस.- ऋसं. ३।४९.

धृतव्रत - ऋसं. ६।१९, ६८; ८।९७.

नृतमः- ऋसं. ३।३०, ४९; ४।१७, २२, २५, ६।१८,३३; ७।१९; ८।२४, १०।२९, ८९.

नृपति - ऋसं. १।१०२, ४।२०, ७।३०. ८।५४. १०।४४.

परम ऋसं. ५।३०.

पिता- ऋसं. ३।३१ ४।१७, ८६,५२; १०।८,२२

पितृतमः पितृणां, पितृणां कर्ता च- ऋसं ४।१७.

प्रतिमानं सत.- ऋस ३।३१.

प्रथम. उपमानां यज्ञियानां च- ऋसं. ६।४१; ८।६१.

प्रभङ्ग. दुर्मतीनाम्- ऋसं. ८।८६.

## सोमः

ज्योतिर्जनकः, अमृतलब्धा, द्यावापृथिव्यन्तरिक्षाणां स्थापकः, गवादिषु रसस्य स्थापकः, धारकः, पोषकः, विज्ञाता, प्रकाशकः, व्यापकः, अविनश्वरबलः, विश्वस्य राजा, ज्योतिषा ज्योतिः, द्यावापृथिव्यग्निसूर्येन्द्र-विष्ण्वादीनां देवानां स्वर्गस्य मर्तानां च जनिता, अमृतं, प्रजानां दिव्यं रेतः; इन्द्रादिदेवतर्पकः, अशस्तिहा, दुरितनाशकः, विसृतिमत्सत्त्वात्मा, इन्द्रस्य ओजः, सूर्यस्य ज्योतिश्च

**अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरन्तः ।**
**अयं त्रिधातु दिवि रोचनेषु त्रितेषु विन्ददमृतं निगूळ्हम् ॥**

त्राता- ऋसं. ३।४१.
मघवत्तमः ऋसं. ८।५४.
मघानां विभक्ता- ऋसं. ७।२६.
मुनीनां सखा- ऋसं. ८।१७.
रक्षिता सर्वतः- असं. १९।१५।३
वरिष्ठः- ऋसं. ८।९७.
विद्वान् विश्वस्य- ऋसं. ४।१६; ६।४२; ७।२०; ८।४६; १०।१६०.
विप्रतमः- ऋसं. ३।३१; १०।११२.
विश्वः- ऋसं. ८।३.
विश्वकर्मा- ऋसं. ८।९८. शुसं. १२।२३.
विश्वजन्याः- ऋसं. १।१६९.
विश्वतो धीः- ऋसं. ८।३४.
विश्वमनाः-ऋसं. १०।५५.
विश्वरूपः- ऋसं. ३।३८.
विश्ववारः- ऋसं. १।३०; ८।४६.
विश्ववीर्यः- ऋसं. २।१६.
विश्वशम्भुः- शुसं. १७।२३.
विश्वानरः- ऋसं. १०।५०.
व्रतपा देवानाम्- ऋसं. १०।३२.
शन्तमः ऋसं. ८।३३, ५३.
शिवतमः- ऋसं. ८।९६.
सखा- ऋसं. ८।१००; १०।११२.
सत्ययोनिः- ऋसं. ४।१९; ८।६९.
सूनृतानां गिरां पतिः- ऋसं. ३।३१.

(१) ऋसं. ६।४४।२३.

अयं सोमः उषसः उषःकालान् सुपत्नीः शोभनः पतिः पालकः सूर्यो यासामुपमां ताहशीः अकृणोत् अकरोत् । अयं एव सूर्ये सूर्यमण्डले अन्तः मध्ये ज्योतिः तेजः अदधात् निहितवान् । त्रिधातु सवनत्रयरूपेण त्रिप्रकारं अयं रसात्मकः सोमः दिवि द्युलोके रोचनेषु रोचमानेषु त्रितेषु तृतीये स्थाने गतेषु विस्तृतेषु देवेषु निगूळ्हं नितरां गूढमदृश्यतया वर्तमानं अमृतं अमृतत्व-कारणं पीयूषं विन्दत् अविन्दत् अलभत । हे इन्द्र त्वत्सहायार्थमेव सोमः कृतवान् इति इन्द्रस्य स्तुति-रभिप्रेतव्या । यद्वा । इदमर्थेनेन्द्र एव परामृश्यते । अयमिन्द्रः उषसः शोभनपालकाः अकरोत् । अयमेव सूर्येऽन्तर्ज्योतिरदधात् । दिवि द्युलोके रोचमानेषु त्रितेषु त्रिस्थानगतेषु देवेषु मध्येऽयमेवेन्द्रस्त्रिधातु सवनत्रया-त्मना त्रिप्रकारं निगूढं पात्रैः सवनसमूहमसमर्पितभूतं सोमममृतं विन्दत् अलभत । ऋसा.

**अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिम् ।**
**अयं गोषु शच्या पक्वमन्तः सोमो दाधार दशयन्त्रमुत्सम् ॥**

अयं सोमः द्यावापृथिवी दिवं च पृथिवीं च वि ष्कभायत् विविधमस्थापयत् । अपि च अयं सोमः सूर्यस्य च रथं सप्तरश्मिं सप्तभिर्रश्मिभिः किरणैरुपेतं सप्ताश्वं सप्तचक्रं वा अयुनक् अयोजयत् । तथा अयं सोमः गोषु अन्तः मध्ये पक्वं निष्पन्नं शच्या प्रजया संकल्प-रूपया उत्सं उत्सरणशीलं पयः दाधार धारयति । दश-यन्त्रम् । उत्सस्य स्तनगर्भविशेषणमेतत् । उत्सरणनिमित्तैर्द-शभिश्चक्षुःश्रोत्रादिभिर्यन्त्ररूपैर्युक्तम् । इदं च पदं मैत्रायणीयकेन मन्त्रान्तरेण व्याख्यायते -'चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम् । द्वौ प्रत्यञ्चा-वनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम् ॥' इति । यद्वा । अयमिन्द्रो द्यावापृथिव्यौ वि ष्कभायत् । स्वे स्वे स्थाने स्थिते अकरोत् । अयमेव सप्तरश्मिं सूर्यस्य रथ-मयुनक् । अयमेवेन्द्रो गोष्वन्तः शच्या आत्मीयेन कर्मणा पक्वं पयो धारयति । एवंभूतेन्द्रार्थं सोमो दशयन्त्रं दश-संख्याकैरिन्द्रवाय्वादिभिर्ग्रहैर्यन्त्रितं गृहीतं रूपंतमुत्समुत्सरण-

(१) ऋसं. ६।४४।२४.

प्रसङ्गात् सोमसूर्ययोराविर्भावमाह—दक्षेण प्रवृद्धेन मनसा सह स जायते पृथिव्याः सम्यग्जायते। तथा ऋतस्य उदकस्यैव गर्भः गर्भस्थानीयः। यद्वा। स यस्य यज्ञस्य मध्ये गर्भः शब्दनीयः स्तुत्यः। स एव सोमः परः परस्तादन्तरिक्षे यमा यमेन नियमेन देवैर्निहितः सः। सर्याद्धि वृष्टिर्भवति। तस्मात्सोमः सूर्यात्मकतयाऽवस्थित इत्यर्थः। एवं पुना। ह इत्यवधारणे। युवानाविव गन्तारौ तौ प्रथम जननकाले दिवि जज्ञतुः। अथ सोमोऽयं सूर्य इति विशेषेण जायेते। तयोश्चाध जनिम जन्म गुहा गुहायां हित निहितं भवति। तयोः नेम अर्ध च उदकं प्रकाशितं भवति। दिवा सूर्यः प्रादुर्भवति रात्रौ चन्द्रमा इति। ऋसा.

आ यस्तस्थौ भुवनान्यमर्त्यो विश्वानि सोमः परि तान्यर्षति।

कृण्वन्त्संचृतं विचृतमभिष्टय इन्दुः सिषक्त्युषसं न सूर्यः॥

यः अमर्त्यः देवः सोमः भुवनानि लोकान् आ तस्थौ आस्थितवान् तानि विश्वानि सर्वाणि भुवनानि परि अर्षति परितो गच्छति। परितो रक्षतीत्यर्थः। सोऽयं यज्ञं यजमानं वा रक्षन् देवः इन्दुः सर्वं कृण्वन् कुर्वन् संचृतं असुरादिभिर्दुःस्वर्यां विमक्तं कृण्वन् अभितो यागाय सिषक्ति सेवते यज्ञम्। उपसं न सूर्यः। सूर्य उषसमिव यथा अभिष्टये अभितो गमनाय प्राणिनां सचृतं प्रकाशः संयुक्तं विचृत तमोभिर्विमुक्तं च लोकं कुर्वन् उषसं सेवते तद्वत्। ऋसा.

अधि द्यामस्थाद्वृषभो विचक्षणोऽरूरुचद्वि दिवो रोचना कविः।

राजा पवित्रमत्येति रोरुवद्दिवः पीयूषं दुहते नृचक्षसः॥

अधि अस्थात् द्यां द्युलोकं वृषभः वर्षिता विचक्षणः विद्रष्टा अयं सोमः। तथा कृत्वा दिवः द्युलोकसम्बन्धीनि रोचना रोचमानानि नक्षत्रादीनि व्यरूरुचत् विविधं रोचयति। कविः क्रान्तप्रज्ञः सन् राजा सोमः पवित्रं दशापवित्रं अत्येति अतिक्रम्य गच्छति। रोरुवत् शब्दं कुर्वन्। दिवः द्युलोकस्य पीयूषं सारं रसं नृचक्षसः नृणां द्रष्टारः सोमाः दुहते स्रवन्ति। स्वकीयं रसमान्तरिक्ष्यमुदकं वा दुहन्तीत्यर्थः। ऋसा.

ऊर्ध्वो गन्धर्वो अधि नाके अस्थाद्विश्वा रूपा प्रतिचक्षाणो अस्य।

भानुः शुक्रेण शोचिषा व्यद्यौत्प्रारूरुचद्रोदसी मातरा शुचिः॥

ऊर्ध्वः उन्नतः गन्धर्वः रश्मीनां धारकः सोमः नाके आदित्ये अधि अस्थात् अधितिष्ठति। किं कुर्वन्। अस्य आदित्यस्य विश्वा विश्वानि रूपाणि प्रतिचक्षाणः प्रतिपश्यन्। भानुः आदित्यः सोमाधिष्ठितः सन् शुक्रेण दीप्तेन शोचिषा तेजसा व्यद्यौत् विद्योतते। न केवलं स्वयम्। अपि तु मातरा निर्मात्र्यौ रोदसी द्यावापृथिव्यौ प्रारूरुचत् प्ररोचयति। शुचिः दीप्तः सन्। ऋसा.

विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोस्ते सतः परि यन्ति केतवः।

व्यानशिः पवसे सोम धर्मभिः पतिर्विश्वस्य भुवनस्य राजसि॥

हे विश्वचक्षः सर्वस्य द्रष्टः सोम प्रभोः परिवृढस्य सतः ते तव ऋभ्वसः। ऋभ्वा इति महन्नाम। महान्तः केतवः रश्मयः विश्वा सर्वाणि धामानि तेजःस्थानानि देवशरीराणि परि यन्ति परिगच्छन्ति। प्रकाशयन्तीत्यर्थः। हे सोम व्यानशिः व्यापनशीलश्च त्वं धर्मभिः धारकैः रसनिस्यन्दैः पवसे पूयसे। विश्वस्य भुवनस्य च पतिः स्वामी त्वं राजसि ईश्वरो भवसि। ऋसा.

राजा समुद्रं नद्यो वि गाहतेऽपामूर्मिं सचते सिन्धुषु श्रितः।

अध्यस्थात्सानु पवमानो अव्ययं नाभा पृथिव्या धरुणो महो दिवः॥

अयं सोमो राजा समुद्रं अन्तरिक्षं नद्यः तत्रत्या अपश्च वि गाहते। विगाह्य चापामूर्मिं सचते उदकपूरं स्रवति सिन्धुषु उदकेषु ग्रहेषु वा श्रितः सन् ह्रयमानः सन् रसम्

(१) ऋसं. ९।८५।१२.

(२) ऋसं. ९।८६।५; सासं. २।५।१ प्रभोस्ते (भोष्टे) व्यानशिः (व्यानशी) धर्मभि (धर्मणा).

(३) ऋसं. ९।८६।८.

(१) ऋसं. ९।८६।२.

(२) ऋसं. ९।८५।९.

द्वारा सर्व प्राण्यान्तरिक्ष मध्येषु वर्तत इत्यर्थः । अस्यत वृष्टिसाधनत्वात् । यद्वा लुप्तोपममेतत् । समुद्र नद्य इव सिन्धुषु वसतीवरीषु श्रितः आश्रितः सन् समुद्र अभिषुत सोमस्याधारत्वात् विगाहते अभिषवात्प्रभृति । पश्चात्पवमानः पूयमानः अयं सोमः मानु समुद्र दशापवित्र अन्यस्मात् अधितिष्ठति । कुत्र देशे । नाभा पृथिव्याः नाभिस्थानीये यज्ञे । तत्सन्निधाने स्थापितं इत्यर्थः । 'यजमाहुर्भुवनस्य नाभिम्' इति श्रुतेः । कीदृशः । मणे दिवः द्युलोकस्य धरुणः धर्ता । ऋग्मा.

**ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः ।**
**दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥**[1]

यज्ञस्य ज्योतिः प्रकाशकः सोमः प्रियं देवानां मधु मधुर रसं पवते क्षरति । यद्वा । ज्योतिर्यज्ञस्य यदपि मधुरि तथा मधु पवते प्रयत इत्यर्थः । सोमरसो विशेषण । पिता पालयिता देवानां जनिता उत्पादयिता सर्वस्य विभूवसुः प्रभूतधनः । ईदृशः सः स्वधयोः द्यावापृथिव्योः । 'स्वधे पूर्वे' इति द्यावापृथिव्योः नामसु पठितः । तयोः अपीच्यं अन्तर्हितं रत्नं रमणीयं धनं दधाति स्थापयति स्तोतृषु । पुनः स एव विशेष्यते । मदिन्तमः मादयितृतमः मत्सरः सोमः इन्द्रियः इन्द्रेण जुष्टः इन्द्रस्य वर्धको वा रसः रसरूपः । ऋग्मा.

**द्रापिं वसानो यजतो दिविस्पृशमन्तरिक्षप्रा भुवनेष्वर्पितः ।**
**स्वर्जज्ञानो नभसाभ्यक्रमीत्प्रत्नमस्य पितरमा विवासति ॥**[2]

दिविस्पृशं दिविस्पृशं द्रापिं कवचं तेजोरूपं वसानः आच्छादयन् यजतः यष्टव्यः अन्तरिक्षप्राः अन्तरिक्षस्य पूरकः उदकेन तादृशः सोमः भुवनेषु उदकेषु अर्पितः स्वः स्वर्गं स्वेन पाययितव्यं देवसंघं स्वर्गं वा जज्ञानः जनयन् । अथवा । स्वः उदकं, तज्जनयन् । नभसा उदकेन अभ्यक्रमीत् अभिक्रामति । अस्य उदकस्य पितरं पालकं प्रत्नं पुराणमिन्द्रं आ विवासति परिचरति । ऋग्मा.

(१) ऋसं. ९।८६।१०; सासं. २।७।१; ताब्रा. १३।७।१.
(२) ऋसं. ९।८६।१४.

**तवेमाः प्रजा दिव्यस्य रेतसस्त्वं विश्वस्य भुवनस्य राजसि ।**
**अथेदं विश्वं पवमान ते वशे त्वमिन्दो प्रथमो धामधा असि ॥**[1]

तव दिव्यस्य रेतसः सकाशात् इमाः प्रजाः उत्पद्यमानाः प्राणिनः उत्पन्नाः । 'सोमो रेतोधाः' (तस. २।१।१।६) इति श्रुतेः । त्वं विश्वस्य भुवनस्य राजसि ईश्वरो भवसि । अथापि च विश्वं हे पवमान ते वशे त्वदधीनं वर्तते । हे इन्दो प्रथमः मुख्यस्त्वं धामधाः धाम्नो धर्ता असि भवसि । ऋग्मा.

**त्वं समुद्रो असि विश्ववित्कवे तवेमाः पञ्च प्रदिशो विधर्मणि ।**
**त्वं द्यां च पृथिवीं चाति जभ्रिषे तव ज्योतींषि पवमान सूर्यः ॥**

हे कवे क्रान्तप्रज्ञ त्वं तस्मात् समुद्रः वर्षसाधनोऽपः अतो विश्ववित् असि । यद्वा । समुद्रो द्रवसमस्तोऽसि विश्वविच्चासि । किञ्च तव विधर्मणि विधारणे पञ्च प्रदिशः प्रकृष्टा दिशो वर्तन्तीति शेषः । त्वं द्यां च दिवं च पृथिवीं च अति जभ्रिषे बिभर्षि । हे पवमान सूर्यः देवः तव ज्योतींषि आश्रयतीति । ऋग्मा.

**स्वायुधः पवते देव इन्दुरशस्तिहा वृजनं रक्षमाणः ।**
**पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ।**[2]

स्वायुधः शोभनायुधः इन्दुः सोमः देवः पवते । स च देवः अशस्तिहा रक्षोहा वृजनं उदकं रक्षमाणः पिता पालकः देवानां तथा जनिता उत्पादकः सुदक्षः सुबलः दिवः विष्टम्भः विशेषेण स्तम्भयिता पृथिव्याश्च धरुणः धारकः । एवं महानुभावः पवते । ऋग्मा.

**उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरंधी ।**
**अपः सिषासन्नुषसः स्वर्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥**[3]

(१) ऋसं. ९।८६।२८, २९.
(२) ऋसं. ९।८७।२, सासं. २।१।३ वृजनं (वृजना).
(३) ऋसं. ९।९०।४; सासं. २।१२।४.

मतिक्रामति। वृषा कामानां वर्षिता सुवानः अभिषूयमाणः इन्द्रः दीप्तः स सोमः अप्यभिवृ मानो ममृजे ते अव्ये अविमये पवित्रे बृहत् प्रभूत ववृधे वर्धते। ऋभा.

<sup>1</sup>महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः॥

महिषः महान् पूज्यो वा सोमः महत् प्रभूत तत्कर्म चकार अकरोत। किं तत्। अपां गर्भः उदकानां गर्भ भूतः जनयितृत्वा जन्यत्वाच्च स सोमः देवान् अवृणीत सम्भजतेति यत् तत् कृतवानिति। किंच पवमानः पवमानः सोमः ओजः सोमपानेन जन्यं बलमिन्द्रे अदधात् व्यदधात। तथा इन्दुः सोमः सूर्ये ज्योतिः तेजः अजनयत। ऋभा.

<sup>2</sup>मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम॥

हे सोम त्वं वायुं मत्सि मादय। किमर्थम्। इष्टये अस्माकमेषणायाश्चाय राधसे धनाय च। तथा पूयमानः पवित्रेण त्वं मित्रावरुणा मित्रावरुणौ च मत्सि तर्पयसि। किंच मारुतं मरुतां स्वभूतं शर्धः बलं च मत्सि। तथा देवान् इन्द्रादीन् मत्सि तर्पयसि। हे देव स्तोतव्य हे सोम द्यावापृथिव्यौ च मत्सि मादय। एतान् हर्षयुक्तान् कृत्वाऽस्मभ्यं धनं प्रयच्छ इत्यर्थः। ऋभा.

<sup>3</sup>एष प्रत्नेन वयसा पुनानस्तिरो वर्पांसि दुहितुर्दधानः।
वसानः शर्म त्रिवरूथमप्सु होतेव याति समनेषु रेभन्॥

प्रत्नेन पूर्वकालीनेन वयसा अन्नेन पुनानः पवमानः। अङ्गुलिकया धारया क्षरन्नित्यर्थः। तादृशः दुहितुः सर्वस्य दोग्ध्र्याः पृथिव्याः वपांसि। वर्प इति रूपनाम वृणोतिकर्मणो। रूपाणि तिरः दधानः स्वतेजसा तिरस्कुर्वन् आच्छादयन् तथा त्रिरूपं त्रिगमिस्तोपेतम्। यद्वा। त्रयः सोमाभिषवाः, तेषां निवासकम्। शर्म यज्ञगृहं वसानः आच्छादयन् अप्सु वसतीवरीषु स्थितः एषः सोमः होतेव यथा होता स्तुतिं कुर्वन् यज्ञेषु याति तद्वत् रेभन् शब्दायमानः सन् समनेषु। समनानि कर्माणि धृष्टाः प्रगल्भाः अन्विच्छन्ति गमना यज्ञाः। तेषु याति गच्छति। ऋभा.

<sup>4</sup>तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः।
त्वां देवासो अमृताय कं पपुः॥

उदप्रुतः वसतीवर्यादिष्वमुदकं प्रति गच्छन्तः। यद्वा। उदकस्य निर्गमयितारः। तव स्वभूताः द्रप्साः द्रवगामिनो रसाः मदाय मदाय इन्द्रं वावृधुः वर्धयन्ति। ततः देवासः देवा इन्द्रादयः कं सुखकरं त्वां अमृताय अमरणाय पपुः पिबन्ति। ऋभा.

## सोमापूषणौ

सोमापूषणौ विश्वजननौ अन्तरस्थानं च

<sup>1</sup>सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम्॥

सोमापूषणा हे सोमापूषणौ युवां रयीणां धनानां जनना जनयितारौ दिवः द्युलोकस्यापि जनना जनयितारौ पृथिव्याः प्रथितायाश्च जनयितारौ भवथः। किंच जातौ जातमात्रावेव युवां विश्वस्य भुवनस्य कृत्स्नस्य जगतः गोपौ गोप्तारौ देवाः अमृतस्य अमरणस्य नाभिं हेतुं अकृण्वन् अकार्षुः। ऋभा.

सोमः विश्वस्य जनिता, पूषा द्रष्टा

<sup>2</sup>विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति।

(१) ऋसं. ९।९७।४१; सासं. १।५।७, २।१०।१; साब्रा. १।७।१; नि. १४।१७.

(२) ऋसं. ९।९७।४२; सासं. २।१०।१ च मत्सि (नो मत्सि); ताब्रा. १५।१।३. (३) ऋसं. ९।९७।४७.

(१) ऋसं. ९।१०६।८; सासं. २।१०।११.

(२) ऋसं. २।४०।१; तैसं. १।८।२२।५; कासं. ८।१७ (७०); मैसं. ४।११।२ (४२).

(३) ऋसं. २।४०।५; मैसं. ४।१४।१ (१०) णावतं (णा अवतं), तैब्रा. २।८।१।६ युवाभ्यां (युनभ्यां).

**सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम ॥**

हे सोमापूषणौ अन्यः युवयोरेकः सोमः विश्वानि भुवना भुवनानि भूतानि जजान अजनयत् । तथा च मन्त्रः— 'सोमः पवते जनिता मतीनाम्' ( ऋसं. ९।९६।५ ) इति । अन्यः अपरः पूषा आदित्यः विश्वं अभिचक्षाणः अभिपश्यन् एति गच्छति । तौ युवां सोमापूषणौ मे धियं कर्म । 'धीः शची' ( नि २।१।२१ ) इति कर्मनामसु पाठात् । अवतं रक्षतम् । किं च वयं युवाभ्यां सहिताः विश्वाः पृतनाः सर्वाः शत्रुसेनाः जयेम अभिभवेम । ऋसा.

---

## वरुणः

असुरोऽन्तरिक्षे स्थितः, सूर्यपथकर्ता, पापमोचकः, नक्षत्रचन्द्रमसां प्रकाशनगमनादिव्रतानामधिष्ठाता

**अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।**
**नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥**

पूतदक्षः शुद्धबलः वरुणः राजा अबुध्ने मूलरहिते अन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजसः स्तूपं सङ्घं ऊर्ध्वं उपरिदेशे ददते धारयति । नीचीनाः स्थुः । ऊर्ध्वे देशे वर्तमानस्य वरुणस्य रश्मयः इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । एषां रश्मीनां बुध्नः मूलं उपरि तिष्ठतीति शेषः । तथा सति केतवः प्रज्ञापकाः प्राणाः अस्मे अस्मासु अन्तर्निहिताः स्थापिताः स्युः । मरणं न भविष्यतीत्यर्थः । ऋसा.

**उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।**
**अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥**

वरुणः राजा सवितुः सूर्यस्य पन्थां मार्गं उरुं विस्तीर्णं चकार । [illegible] । उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेवं कृतवान् इति तदुच्यते । अन्वेतवा उ अनुक्रमेण उदयास्तमयौ गन्तुमेव । तथा अपदे पादरहिते अन्तरिक्षे पादा प्रतिधातवे पादौ प्रक्षेप्तुं अकः मार्गं कृतवान् । पूर्वत्र रथस्य मार्गः अत्र पादयोरिति विशेषः । यद्वा । अपदे यत्र बद्धेन मया गन्तुमशक्यं तस्मिन् प्रदेशे पादौ प्रक्षेप्तुं उपायं बन्धविमोचनरूपं कृतवानित्यर्थः । उत अपि च हृदयाविधश्चित् अस्मदीयहृदयवेधकस्य शत्रोरपि अपवक्ता अपवदिता निराकर्ता भवतु । ऋसा.

**शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।**
**बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥**

हे राजन् वरुण ते तव शतं भिषजः बन्धनिवारकाणि शतसंख्याकानि औषधानि भेषजानि सन्ति । ते तव सुमतिः अस्मदनुग्रहबुद्धिः उर्वी विस्तीर्णा गभीरा गाम्भीर्योपेता स्थिरा अस्तु । निर्ऋतिं अस्मदनिष्टकारिणीं निर्ऋतिं पापदेवतां पराचैः पराङ्मुखां कृत्वा दूरे अस्मत्तो व्यवहिते देशे स्थापयित्वा त्वं बाधस्व । कृतं चित् अस्माभिरनुष्ठितमपि एनः पापं अस्मत् प्र मुमुग्धि प्रकर्षेण मुक्तं कुरु । ऋसा.

**अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।**
**अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥**

अमी रात्रावस्माभिर्दृश्यमानाः ऋक्षाः सप्त ऋषयः । तथा च वाजसनेयिन आमनन्ति—'ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते' इति । यद्वा । ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः । 'ऋक्षाः स्तृभिरिति नक्षत्राणाम्' ( नि० ३।२० ) इति यास्केन उक्तत्वात् । उच्चा

(१) ऋसं. १।२४।७. (२) ऋसं. १।२४।८; तैसं. १।४।४५।१; कासं. ४।१३ (७८), मैसं. १।३।३९ (११४) विधश्चित् ( हृताश्चित् ), शुसं. ८।२३; शब्रा. ४।४।५।४.

(१) ऋसं. १।२४।९; तैसं. १।४।४५।१ गभीरा (गम्भीरा) दूरे ( [illegible] ); कासं. ४।१३ (७९) बाधस्व दूरे ( आरे बाधस्व ) अस्मत् ( अस्मात् ); मैसं. १।३।३९ ( ११५ ) बाधस्व दूरे ( आरे बाधस्व ).

(२) ऋसं. १।२४।१०; तैआ. १।११।२ नक्तमेति ( नक्षत्रमेति ); नि. ३।२०।६.

उच्चैः उपरि अप्रदेशे निहिताः स्थापिताः ये सन्ति ते ऋक्षाः नक्त रात्रौ ददृश्रे सर्वैरपि दृश्यन्ते । दिवा अहनि कुह चित् क्व इयुः क्वापि गच्छेयुः । न दृश्यन्ते इत्यर्थः । वरुणस्य राज्ञः व्रतानि कर्माणि नक्षत्रदर्शनादिरूपाणि अदब्धानि केनापि अहिंसितानि । किंच वरुणस्य आज्ञयैव चन्द्रमाः नक्त रात्रौ विचाकशत विशेषेण दीप्यमानः एति गच्छति । ऋमा.

पक्षिपद-नौ-मास-वायुमार्ग-देवानां वेदिता, प्रजासु स्थितः, सम्राट्, सुक्रतुः, धृतव्रतः, प्रज्ञावद्दृष्टाद्भुतकर्मा

[1]**वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।**
**वेद नावः समुद्रियः ॥**

अन्तरिक्षेण पतता आकाशमार्गेण गच्छता वीना पक्षिणा पद यः वरुणः वेद । तथा समुद्रियः समुद्रेऽवस्थितः वरुणः नावः जले गच्छन्त्याः पदं वेद जानाति सोऽस्मान् बन्धनान्मोचयत्विति शेषः । ऋसा.

[2]**वेद मासो धृतव्रतो द्वादश प्रजावतः ।**
**वेदा य उपजायते ॥**

धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतः तदा तदा पद्यमानप्रजायुक्तान द्वादश मासाः चैत्रादीन फाल्गुनान्तान वेद जानाति । यः त्रयोदशोऽधिकमासः उपजायते संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेद । वाक्यशेषः पूर्ववत् । ऋसा.

[3]**वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।**
**वेदा ये अध्यासते ॥**

उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनिं मार्गं वेद वरुणो जानाति। ये देवाः अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति । ऋसा.

[4]**नि षसाद धृतव्रतो वरुणः पस्त्यास्वा ।**
**साम्राज्याय सुक्रतुः ॥**

धृतव्रतः पर्वोक्तः वरुणः पस्त्यासु दैवीषु प्रजासु आ नि षसाद आगत्य निषण्णवान् । किमर्थम् । प्रजानां साम्राज्यसिद्ध्यर्थं, सुक्रतुः शोभनकर्मा । ऋसा.

[1]**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।**
**कृतानि या च कर्त्वा ॥**

अतः अस्माद्वरुणात विश्वानि अद्भुता सर्वाण्याश्चर्याणि चिकित्वान प्रज्ञावान अभि पश्यति सर्वतोऽवलोकयति या कृतानि यान्याश्चर्याणि पूर्व वरुणेन सम्पादितानि । चशब्दात् अन्यानि यान्याश्चर्याणि कर्त्वा इतः पर कर्तव्यानि तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः । ऋसा.

दुरितमोचनः, ऋतस्य धर्ता, सर्वस्य एक एव ईश्वरः

[2]**वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।**
**मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥**

हे वरुण मत मत्सकाशात रशनामिव रज्जुमिव आगः विहितानुष्ठानवर्जनित पाप वि श्रथय शिथिलीकुरु । विमोचयेत्यर्थः । ते त्वत्सम्बन्धिनः ऋतस्य उदकस्य पूर्णा खा नदीम । खा इति नदीनाम । ता ऋध्याम लभेमहि । अपिच धिय कर्म वयतः सन्तन्वतः मे मम तन्तुः कर्मसन्ततिः मा छेदि छिन्नो मा भूत । नैरन्तर्येण इत्यर्थः । तथा ऋतोः समाप्तिकालात पुरा पूर्वं अपसः कर्मणः मात्रा शरीरं प्राच्योदीच्याङ्गलक्षण मा शारि शीर्ण विकलं मा भूत ।

ऋसा.

[3]**अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय ।**

मैसं. १।६।१२ (३२), २।६।१२ (३६), २।७।१६ (२३१), ४।४।६ (७); शुसं. १०।२७, २०।२; ऐब्रा. ३८।२।१, ३८।४।१; तैब्रा १।७।१०।२, २।६।५।१, शब्रा. ५।४।४।५, १२।८।३।१०.

(१) ऋसं. १।२५।७.
(२) ऋसं. १।२५।८.
(३) ऋसं. १।२५।९.
(४) ऋसं. १।२५।१०; तैसं. १।८।१६।१; कासं. २।७ (४३), ७।१४ (८३), १५।८ (२३), ३८।४ (४४);

(१) ऋसं. १।२५।११.
(२) ऋसं. २।२८।५; मैसं. ४।१४।९ (१२०).
(३) ऋसं. २।२८।६; मैसं. ४।१४।९ (१२२) अपो सु (अपो षु).

**दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेश ॥**

हे वरुण भियसं भयं मत् मत्तः सु सुष्ठु अपो म्यक्ष अपगमय। हे सम्राट् सम्यग्राजमान हे ऋतावः सत्यवन् यज्ञवन् वा वरुण मा मां अनु गृभाय अनुगृहाण। अपि च दामेव वत्सात् यथा दोग्धा वत्सबन्धनात् बन्धनीं रज्जुं विमुञ्चति तथा अंहः पापं मत्सकाशात् वि मुमुग्धि विमुञ्च पृथक्कुरु। त्वदारे त्वत्तो दूरदेशे वर्तमानस्य दन्तु इत्यर्थः। त्वत्तोऽन्यः कश्चित् निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि नहि ईशे नेष्टे। त्वमेवेश्वर इत्यर्थः। ऋग्भा.

राजा त्रसदस्युः परमेश्वरं वरुणं इन्द्रं चात्मत्वेनानुभवति

**मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः।**
**क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥**

क्षत्रियस्य क्षत्रियजातेरुत्पन्नस्य विश्वायोः कृत्स्नगमनस्यायुर्भागस्य। मम द्विता मनो निर्देशः। द्विता द्विविधमार्गभेदेन द्विप्रकारं राष्ट्रम्। मम त्रसदस्योः विश्वे सर्वे अमृताः देवाः यथा नः अस्माकं सर्वाणि तथा राष्ट्र प्रजाश्चेत्यर्थः। वरुणस्य वारकस्य वरुणात्मनो वा कृष्टेः मनुष्यस्य नद्दतो वा उपमस्य। अन्तिकनामैतत्। सर्वे पार्श्वान्तिकस्थमस्य वव्रेः। रूपनामैतत्। रूपवतो मम क्रतुं कर्म सचन्ते सेवन्ते देवाः सर्वेऽपि। अहं च राजामि। राजतिरैश्वर्यकर्मा। सर्वेश्वरः भवामि। यद्वा। उपमस्य वव्रेः कृष्टेः राजामीति योजना। ऋग्भा.

**अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त।**
**क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥**

अहमेव च राजा वरुणः भवामि। मह्यं मदर्थमेव प्रथमा मुख्यानि तानि प्रसिद्धानि असुर्याणि असुरविधातकानि बलानि धारयन्त अधारयन् देवाः। शिष्टं गतम्। ऋग्भा.

(१) ऋसं. ४।४२।१.
(२) ऋसं. ४।४२।२.

**अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके।**
**त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥**

अहं त्रसदस्युः इन्द्रः इन्द्रोऽस्मि। अहं वरुणः च। ते महित्वा महत्त्वेन उर्वी विस्तीर्णे गभीरे दुरवगाहे अगाधगम्भीरे वा सुमेके सुरूपे रजसी द्यावापृथिव्यौ त अपि अहमेव। विद्वान् जानन् त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूतानि समैरयं सम्प्रेरयम्। रोदसी द्यावापृथिव्यौ धारयं च धृतवानस्मि। ऋग्भा.

**अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य।**
**ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥**

अहमेव उक्षमाणाः सिञ्चन्तीः अपः अपिन्वं असेचयम्। तथा ऋतस्य उदकस्य आदित्यस्य वा सदने स्थाने निमित्ते सति दिवं द्युलोकं धारयम्। यद्वा। उदकाधारे स्थाने दिवमादित्यं धारयम्। अहमेव ऋतेन उदकेन निमित्तेन अदितेः पुत्रः ऋतावा अभवम्। उत अपि च भूम आत्मनः राष्ट्रं त्रिधातु त्रिप्रकारं वि विशेषेण प्रथयत्। मदर्थमेव हि आदित्यो स्वरूपमधारयदिति परमेश्वरः। ऋग्भा.

**मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते।**
**कृणोम्याजिं मघवाहमिन्द्र इयर्मि रेणुमभिभूत्योजाः ॥**

मां मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्राममिच्छन्तः नरः नेतारो भटाः। अनुगच्छन्ति इति शेषः। मा एव वृताः सन्तः समरणे संग्रामे हवन्ते आह्वयन्ति युद्धार्थम्। मघवा धनवान् अहमिन्द्रः सन् आजिं रणं कृणोमि करोमि। अभिभूत्योजाः परेषां अभिभावित्रबलोऽहं रेणुं इयर्मि प्रेरयामि। ऋग्भा.

**अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतम्।**

(१) ऋसं. ४।४२।३. (२) ऋसं. ४।४२।४.
(३) ऋसं. ४।४२।५. (४) ऋसं. ४।४२।६.

**यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥**

अद्य अमदन्नु ता तानि प्रतिमन्दानि विश्वा सर्वाणि चकर अकार्षम । अप्रतीता अप्रतिगता मा मां दैव्यं सहः देवसम्बन्धि सहो बलं नकिः वरते नैव वारयति । यत यस्मात सोमासः सोमाः मा मां ममदन् अमदयन । यत च उक्था शस्त्राण्यपि ममदन तस्मात मत्तः अपारे दुष्पारे उभे रजसी द्यावापृथिव्यौ भयेते चलतः ।

ऋसा.

सूर्यार्थमाकाशस्य विस्तारयिता, अन्तरिक्षबलपयःक्रतु-
वह्निसूर्यसोमानां यथास्थानेषु व्यवस्थापकः, सर्वस्य
राजा, जलजनयिता, कविततमः, सर्वो, जगतः
पारनेत्ता

**प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।**
**वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥**

अत्रिः स्वात्मानं सम्बोध्य ब्रवीति । अत्र त्व सम्राजे सम्यग् राजमानायेश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणाय उपद्रवस्य निवारकाय जनानामावरकाय चेतन्नामकाय देवाय बृहत् प्रभूतं गभीरं दुरवगाहं ब्रह्म-र्षोपेत प्रियं प्रियभूत ब्रह्म स्तोत्ररूप कर्म प्र अर्च प्रार्चय । प्रोच्चारयेत्यर्थः । यः वरुणः शमितेव चर्म शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति तद्वत् पृथिवीं विस्तीर्णमन्तरिक्षम् । 'तृतीयस्या पृथिव्याम्' (तैस. १।२।१२।१) इति श्रुतेः अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् । सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय वि जघान विस्तारयामास । विस्तृतं हि व्यवहारयोग्य भवति । तस्मात् व्यवहाराय अन्तरिक्षं विस्तारितवान् । 'उरुं हि राजा वरुणश्चकार' (ऋसं. १।२४।८) इति ह्युक्तम् ।

ऋसा.

**वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।**
**हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥**

अयं वरुणः वनेषु वृक्षाग्रेषु अन्तरिक्षं वि ततान विस्तारितवान् । तथा वाजसनेयक— 'वनेषु हीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततान' इति । वाजं बलं अर्वत्सु अश्वेषु वि ततान । पयः क्षीरं उस्रियासु गोषु । उस्रिया इति गोनाम । उस्रा उस्रियेत्यादिषु गोनामसु पाठात् इति तद्व्युत्पत्तिः । हृत्सु हृदयेषु क्रतुं कर्मसंकल्पम । यद्धि मनसा ध्यायति तत्कर्मणा करोति । अप्सु उदकेषु अग्निं वैद्युतमौर्वं वा । सर्वत्र वि ततानेति सम्बन्धः । किंच दिवि द्युलोके सूर्यं अदधात स्थापितवान । सोम च अद्रौ पर्वतेऽदधात ।

ऋसा.

**नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।**
**तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥**

नीचीनबारं अधोमुखबिलं प्र ससर्ज कृतवान् । कम । कवन्धम । कवनमुदकं, तत् धीयतेऽस्मिन्निति कवन्धो मेघः । तं तथाऽकरोत । अथवा कवन्धमुदकम । तदुदकं नीचीनबारं नीचीननिर्गमनबिलं चकार । मेघं विदार्य उदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते । रोदसी द्यावापृथिव्यौ अन्तरिक्षं च प्रति । त्रीन् प्रतीत्यर्थः । तेन उदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणः भूम भूमिं व्युनत्ति क्लेदयति । वृष्टिः सेक्ता पुमान् यवं न यवमिव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्रोनत्ति । अथवा वृष्टिवरुण इति संबन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यव पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र 'नीचीनबारं वरुणः कवन्धम' (नि १०।४) इत्यादि निरुक्तं द्रष्टव्यम् ।

ऋसा.

(१) ऋसं. ५।८५।१; कासं. १२।१५ (६१).

(२) ऋसं. ५।८५।२; तैसं. १।२।८।१ पय उस्रियासु (पयो अघ्न्यासु) अप्स्वग्निं (विक्ष्वग्निं); कासं. २।६ (३७), ४।९ (५०) पय उस्रियासु (पयो अघ्न्यासु) अप्स्वग्निं (विक्ष्वग्निं); मैसं. १।२।६ (४०) अप्स्वग्निं (दिक्ष्वग्निं). पूर्वार्ध कासंवत्; शुम. ४।३१ अप्स्वग्निं (विक्ष्वग्निं); शाब्रा. ७।१०; शब्रा. ३।३।४।७.

(१) ऋसं. ५।८५।३; नि. १०।४.

**[१]उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित्।**
**समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥**

वरुणः भूमिं पृथिवीं प्रथितमन्तरिक्षम्। अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुक्तम्। उत अपि च द्यां द्युलोकं उनत्ति क्लेदयति। यदा अयं दुग्धं उदकपूरणं वृष्टिं कामयते। अथवा दुग्धमुदकम्। तेन तत्कार्यमोषध्यादिकं लक्ष्यते। ओषध्यादयः प्रवर्धन्तामिति यदा कामयते आदित् अनन्तरमेव स वसत समाच्छादयन्ति। के। पर्वतासः पर्ववन्तः अद्रयः। केन। अभ्रेण मेघेन। किंच तविषीयन्तः बलमिच्छन्तः वीराः विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयन्त श्लथयन्ति मेघान्। ऋमा.

**[२]इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम्।**
**मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥**

आसुरस्य असुरसंबन्धिनः। असुराणामस्य च वध्यघातकभावः संबन्धः। असुरहन्तुरित्यर्थः। अथवा असुरो मेघः। प्राणदानात् तत्संबन्धिनः श्रुतस्य विश्रुतस्य महीं महतीं इमां मायां प्रज्ञां प्र वोचं प्रब्रवीमि। केषा मायेति सोच्यते। यः वरुणः अन्तरिक्षे तस्थिवान् तिष्ठन् मानेनेव दण्डेनेव सूर्येण पृथिवीं अन्तरिक्षं वि ममे परिच्छिनत्ति सैषा माया। ऋमा.

**[३]इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष।**
**एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥**

कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्य इमां सर्वप्रसिद्धां महीं महतीं मायां प्रज्ञां नकिः नैव आ दधर्ष न हिनस्ति कश्चिदपि। ऊ नु इति पूरणौ। यत् यस्मात् एकं समुद्रं उद्ना उदकेन न पृणन्ति न पूरयन्ति। काः। एनीः एन्यः शुभ्रा गमनशीला वा आसिञ्चन्तीः उदकमासिञ्चन्त्यः अवनयः नद्यः। बह्व्यो नद्यः सर्वदोदकेन पूरयन्त्योऽपि एकमपि समुद्रं न पूरयन्तीति। इदं वरुणस्य महत् कर्म इति। अत्र अन्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यं, तस्य वरुणादिरूपावस्थानात्। 'एष ब्रह्म' इत्यादिश्रुतेः। ऋमा.

गुरुमित्रभ्रात्रादिसंबंधिपापनिवारकः

**[१]अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा।**
**वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥**

हे वरुण अर्यम्यम्। अर्यमवत्प्रियम्। प्रदातारमित्यर्थः। अथवा ईरणात् मननात् च आप्तमीत्यर्यमा गुरुः, तम्। वा अथवा मित्र्यम्। अनुग्राहकमित्यर्थः। वा अथवा सखायं समानख्यानं सदमित् सर्वदैव भ्रातरं वा। नित्यं निरन्तरं वेशं निकटनिवासनवर्तिनं वा। अरणं वा अशब्दमित्यर्थः। अथवा अरणमदातारं वा नित्यं निरन्तरम्। एतान् प्रति यत् सीं सर्वतः आगः अपराधं चकृम तत् शिश्रथः अस्मत्तो विनाशय। ऋमा.

मिथ्याभिशंसनाज्ञानकृतदुरितमोचन.

**[२]कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म।**
**सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥**

कितवासः कितवा द्यूतकृतः। किं तवास्ति, सर्वं मया जितमिति वदन्तीति कितवः। ते दीवि न देवने द्यूते यथा यद्रिरिपुः रिपयन्ति पापमारोपयन्ति तथास्मासु द्वेषारो मयि त्वमेतत् पापमकरोः इत्याक्षिपन्ति। अत्र पुरस्तादुच्चारितोऽपि नकार उपमार्थीयः। वा अथवा। घ इति पूरणः। यत् पापं सत्यं आरोपमन्तरेण कृतवन्तः स्मः। उत अपि च यत् कृतं पापं न विद्म न जानीमः ता तानि सर्वा सर्वाणि शिथिरेव शिथिलानीव शिथिल-

(१) ऋसं. ५।८५।४.
(२) ऋसं. ५।८५।५.
(३) ऋसं. ५।८५।६; नि. ६।१३।१.

(१) ऋसं. ५।८५।७.
(२) ऋसं. ५।८५।८; तैसं. ३।४।११।६ देवाधा (देवाथा); काठसं. २३।१२ (४६); मैसं. ४।१४।३ (४०) तैसंवत्.

बन्धनानि फलानीव वि ष्य विमोचय । हे देव अध अनन्तर ते तव प्रियामः प्रियाः स्याम भवेम ।

ऋसा.

द्यावापृथिव्योः स्तम्भनः, सूर्यस्य नक्षत्राणां च प्रेरकः, भूमेर्विस्तारयिता, अनेनमः सम्तस्य रूपः दिदृक्षाया. अन्तर्वर्तित्वेन गर्भापर्यायपायाः समाजिगमिषायाश्च विषयः, आनन्ददश्च

[1]धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।

प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥

अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना, नु क्षिप्रं धीरा धीराणि धैर्यवन्ति भवन्ति । यः वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यौ वि तस्तम्भ विविध स्वस्वे स्वस्वे स्थाने स्थिरे अकरोत् । यश्च बृहन्तं महान्तं नाकमादित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वेधं प्र ननुदे प्रेरयति स्म । अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः । भूम भूमिं च यः पप्रथत् अप्रथयत विस्तारितवान् । तस्यास्य वरुणस्येत्यन्वयः ।

ऋसा.

[2]उत स्वया तन्वा सं वदे तत्कदा न्वन्तर्वरुणे भुवानि ।

किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥

वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति । उतेति विचिकित्सायाम् । उत किं स्वया तन्वा स्वीय नात्मीयेन शरीरेण स वदे सहवदनं करोमि । आहो स्वित् तत्तेन वरुणेन सह सं वदे । कदा नु कदा खलु वरुणे देवे अन्तः भुवानि अन्तर्भूतो भवानि । वरुणस्य चित्ते सत्वरो भवानीत्यर्थः । अपि च मे मदीयं हव्यं स्तोत्रं हविर्वा अहृणानः अक्रुध्यन् वरुणः किं केन हेतुना जुषेत सेवेत । सुमनाः शोभनमनस्कः सन्नहं कदा कस्मिन्काले मृळीकं सुखयितारं वरुणमभि ख्य अभिपश्येयम् ।

ऋसा.

(१) ऋसं. ७।८६।१, काठसं. ४।१६ (१४३).
(२) ऋसं. ७।८६।२.

[1]पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।

समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥

हे वरुण तदेनः पापं पृच्छे त्वां पृच्छामि । दिदृक्षु, द्रष्टुमिच्छन् । यद्वा पृच्छामि केन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि पृष्टः सन् तत्पापं कथय । अथ विपृच्छं विविधं प्रष्टुं चिकितुषः विदुषो जनान् उपो एमि उपागाम । ते कवयश्चित् क्रान्तदर्शिनो जनाश्च मे मह्यं समानमित् समानमेवैकरूपमेवाहुः अकथयन् । यदाहुस्तदाह । हे स्तोतः तुभ्यमयं ह अयमेव वरुणः हृणीते क्रुध्यतीति । अतः क्रोधं परित्यज्यास्मान् पाशेभ्यो मोचय ।

ऋसा.

[2]किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।

प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥

हे वरुण ज्येष्ठं अधिकं किमाग आस कोऽपराधो मया कृतो बभूव । यत् येनागसा सखायं मित्रभूतं सन्तं स्तोतारं जिघांससि हन्तुमिच्छसि । हे दूळभ दुर्दभ अन्यैर्बाधितुमशक्य स्वधावः तेजस्विन् हे वरुण तत् आगः मे मह्यं प्र वोचः प्रब्रूहि । एवं सति तस्य प्रायश्चित्तं कृत्वा अनेनाः अपापः सन्नहं तुरः त्वरमाणः शीघ्रः नमसा नमस्कारेण हविषा वा त्वां अव इयां उपगच्छेयम् ।

ऋसा.

पित्र्यात्स्वकृताच्च पापात् मोचयिता

[3]अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।

अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥

हे वरुण पित्र्या पितृतः प्राप्तानि नः अस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतान् अव सृज विमुञ्च । अस्मत्तो विश्लेषय । वयं च या यानि द्रोहजातानि तनूभिः

(१) ऋसं. ७।८६।३.
(२) ऋसं. ७।८६।४.
(३) ऋसं. ७।८६।५.

वडवाः प्रति शीघ्रं गच्छति तद्वत् ऋतायन् ऋतं शीघ्रं गमनमात्मन इच्छन् मही: महती: अवनी: रात्री: अहभ्य: अहोभ्यः सकाशात् चकार भेदेन कृतवान्। अस्तं गच्छन् सूर्य एव वरुण इत्युच्यते । स हि स्वगमनेन रात्रीर्जनयति । ऋसा.

**आत्मा ते वातो रज आ नवीनोत्पशुर्न भूर्णि-र्यवसे ससवान्।**
**अन्तर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रियाणि ॥**

हे वरुण ते त्वदीयस्त्वयाऽन्तरिक्षे प्रेर्यमाणः वातः वायुः आत्मा सर्वस्य प्राणिजातस्य प्राणरूपेण धारयिता । स च रजः उदकं आ नवीनोत् समन्तात् प्रेरयति । वातेन हि वृष्टिर्जायते । भूर्णिः जगतो भर्ता स वायुः यवसे घासे प्रक्षिप्ते सति यथा पशुर्भक्षवान् भवति तद्वत् ससवान् । 'ससम्' इत्यन्ननाम । तद्वान् भवति । हविर्लक्षणमन्नमपि तस्मै प्रयच्छन्तीत्यर्थः । यद्वा ससेति: ब्रह्मणो रूपम् । ततः ससवान् संभक्तवान् वातो घासे सति पशुर्यथा भाग्वान् भवति तद्वज्जगतो भर्ता । हे वरुण मही महत्यौ बृहती परिवृढे इमे रोदसी द्यावापृथिव्यौ अन्तः मध्ये । द्यावापृथिव्योर्मध्ये इत्यर्थः । ते तव विश्वा सर्वाणि धाम धामानि स्थानानि तेजांसि वा प्रियाणि सर्वेषां प्रीतिकराणि भवन्ति । ऋसा.

**परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके ।**
**ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥**

स्पशन्ति स्पृशन्तीति स्पशः चराः । वरुणस्य देवस्य स्पशः चराः स्मदिष्टाः । स्मदित्येतत् प्रशस्यार्थे सहार्थे च वर्तते । प्रशस्तगतयः । यद्वा । सह प्रेषिताः सन्तः । सुमेके शोभनमेहने सुरूपे वा उभे रोदसी द्यावापृथिव्यौ परि पश्यन्ति परितः ईक्षन्ते । उभयोर्लोकयोर्वर्तमानान् पुण्यापुण्यकारिणो जनान् पश्यन्तीत्यर्थः । यस्मादेव तस्मात् तदीया ऋतावानः कर्मवन्तः यज्ञधीराः यज्ञेषु कृतबुद्धयः प्रचेतसः प्राज्ञाः कवयः क्रान्तदर्शिनः ये जनाः मन्म मन्मानि स्तोत्राणि इषयन्त गमयन्ति वरुण प्रापयन्ति । तानपि परिपश्यन्तीत्यर्थः । अतः अस्मानपि स्तोतॄन् ज्ञात्वा पापात् मुञ्चन्ति त्वत्स्पशाः इत्याशास्ते । ऋसा.

**उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।**
**विद्वान्पदस्य गुह्या न वोचद्युगाय विप्र उपराय शिक्षन् ॥**

मेधिराय मेधाविने मे मह्यं वरुणः उवाच उक्तवान् । किमुक्तवान् तदाह—त्रिः सप्त एकविंशतिसंख्याकानि नामानि अघ्न्या गौः बिभर्ति धारयतीति । वागत्र गौरुच्यते । सा च उरसि कण्ठे शिरसि च वर्तमानि गायत्र्यादीनि सप्त छन्दसां नामानि बिभर्ति । यद्वा । वेदात्मिका वागेकविंशतिसंस्थानां यज्ञानां नामानि बिभर्ति धारयति । अपर आह । गौः पृथिवी । तस्याश्च 'गौर्ग्मा ज्मा' इति पठितान्येकविंशतिनामानीति । अपि च विद्वान् जानन् विप्रः मेधावी स वरुणः युगाय युक्ताय उपराय उप समीपे रममाणायान्तेवासिने मह्यं शिक्षन् उपदिशन् पदस्य उत्कृष्टस्य स्थानस्य ब्रह्मलोकलक्षणस्य सम्बन्धीनि गुह्या गुह्यानि रहस्यान्युपदेशगम्यानि । नशब्दश्चार्थे । इमानि च वोचत् उक्तवान् । अतोऽहं वरुणस्य शिष्योऽस्मि । तस्मात् स वरुणः अस्मान् पापात् मोचयतीत्यर्थः । ऋसा.

**तिस्रो द्यावो निहिता अन्तरस्मिन्तिस्रो भूमी-रुपराः षड्विधानाः ।**
**गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्ययं शुभे कम् ॥**

तिस्रः त्रिप्रकारा उत्तममध्यमाधमभावेन त्रिविधाः द्यावः द्युलोकाः अस्मिन् वरुणे अन्तः मध्ये निहिताः । तिस्रः पूर्ववत् त्रिविधाः भूमीः भूम्यश्च षड्विधानाः । विधानं विधा । वसन्तादृतुभेदेन षड्विधाः प्रकाराः यासु तादृश्यः । उपराः अस्मिन्नेव वरुणे उपरा अन्तर्भूताः । लोकानां त्रित्वं च 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा. २।१७) इत्यादिना ब्राह्मणेनावगम्यते । 'तिस्रो भूमीर्धारयन्' (ऋसं. २।२७।८)

(१) ऋसं. ७।८७।२. (२) ऋसं. ७।८७।३. (१) ऋसं. ७।८७।४. (२) ऋसं. ७।८७।५.

अपि च दर्शतः दर्शनीयः सः वरुणः उस्रः उत्सरणशीलः सन् विश्वं मायया कर्मणा परि परितः नि दधे निदधाति । किञ्च तस्य वरुणस्य व्रतं कर्म वेनीः कामयमानाः प्रजाः तिस्रः उषः त्रिषु प्रातर्माध्यंदिनं सायं च अनु अवर्धयन् अनुवर्धयन्ति । सिद्धमन्यत् । ऋभा.

[1]यः ककुभो निधारयः पृथिव्यामधि दर्शतः ।
स माता पूर्व्यं पदं तद्वरुणस्य सप्त्यं स हि गोपा
इवेर्यो नभन्तामन्यके समे ॥

यः वरुणः पृथिव्यामधि पृथिव्या उपरि दर्शतः दर्शनीयः सन् ककुभः दिशः निधारयः निधारयति । सः वरुणः माता निर्माता । पूर्व्यं प्रत्नं पदं स्वर्गाख्यं स्थानं सप्त्यं अस्माभिश्च सर्पणीयं तत् वरुणस्य स्वभूतम् । अपि च सः हि सः वरुणः इर्यः ईश्वरः सन् गोपा इव गोपालः इव पशूनामस्माकं रक्षिता । सिद्धमन्यत् । ऋभा.

[2]यो धर्ता भुवनानां य उस्राणामपीच्या वेद
नामानि गुह्या ।
स कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभ-
न्तामन्यके समे ॥

यः वरुणः भुवनानां धर्ता धारयिता यः च उस्राणां देवाधिष्ठानभूतानां रश्मीनां अपीच्या अपीच्यान्यन्तर्हितानि गुह्या गुह्यानि गुप्तया निहितानि नामानि वेद जानाति सः वरुणः कविः प्राज्ञः सन् काव्या काव्यानि कविकर्माणि पुरु बहूनि रूपं द्यौरिव पुष्यति । सिद्धमन्यत् । ऋभा.

[3]यस्मिन्विश्वानि काव्या चक्रे नाभिरिव श्रिता ।
त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे
अश्वाँ अयुक्षत नभन्तामन्यके समे ॥

यस्मिन् वरुणे विश्वानि सर्वाणि काव्या काव्यानि कविकर्माणि चक्रे नाभिरिव यथा रथस्य चक्रे नाभिस्तथा श्रिता श्रितानि तं त्रितं त्रिस्थानं वरुणं जूती जूत्या क्षिप्रं सपर्यत हे मदीया जनाः परिचरत । किमर्थमित्यत आह । व्रजे गोष्ठे गावो न यथा गाः संयुजे संयोगार्थं सह स्थापयितुं युञ्जन्ति तथाऽस्माकमभियोगाय अश्वान् युक्षत सप्तयो युञ्जन्ति । अतस्तदुपद्रवपरिहाराय वरुणं परिचरतेत्यर्थः । ऋभा.

देवानुष्ठेयव्रत., समुद्ररूप , तेजसा मायानिवारक, तेजसा त्रिलोकव्यापी, द्यावापृथिव्योः स्तम्भनः

[1]यं आस्वत्क आशये विश्वा जातान्येषाम् ।
परि धामानि मर्मृशद्वरुणस्य पुरो गये विश्वे
देवा अनु व्रतं नभन्तामन्यके समे ॥

.... परिमृशतः वरुणस्य पुरो गये रथस्य पुरस्ताद्वर्तमानं तस्य वरुणस्य पुरस्तात् विश्वे सर्वे देवाः व्रतं कर्म अनुगच्छन्ति यथः । सिद्धमन्यत् । ऋभा.

[2]स समुद्रो अपीच्यस्तुरो द्यामिव रोहति नि
यदासु यजुर्दधे ।
स माया अर्चिना पदास्तृणान्नाकमारुहन्नभन्ता-
मन्यके समे ॥

यस्मादापः समुद्रवन्ति सः वरुणः समुद्रः अपीच्यः अन्तर्हितः तुरः क्षिप्रः द्यामिव यथादित्यो द्यां रोहति तथा नाकं रोहति । अपि च यत् यः वरुणः आसु दिक्षु यजुः प्रजाभ्यो दानं नि दधे निदधाति सः वरुणः मायाः असुराणां मायाः अर्चिना अर्चिष्मता पदा स्थानेन । तेजसेत्यर्थः । आ अस्तृणात् समन्ताद्धिनस्ति । नाकं स्वर्गं आरुहत् आरोहति । सिद्धमन्यत् । ऋभा.

[3]यस्य श्वेता विचक्षणा तिस्रो भूमीरधिक्षितः ।
त्रिरुत्तराणि पप्रतुर्वरुणस्य ध्रुवं सदः स सप्ताना
मिरज्यति नभन्तामन्यके समे ॥

यस्य वरुणस्य अधिक्षितः अन्तरिक्षेऽधिवसतः श्वेता श्वेतानि विचक्षणा तेजांसि तिस्रो भूमीः त्रिरुत्तराणि त्रिगुणमधिस्थितानि भुवनानि पप्रतुः प्रपूरयन्ति । तथा च मन्त्रवर्णः ' तिस्रो भूमीर्धारयन् त्रींरुत द्यून् ' ( ऋस. २।२७।८ ) इति । तस्य । वरुणस्य सदः स्थानं ध्रुवं अचलमस्ति । किञ्च सः वरुणः सप्तानां सिन्धूनां इरज्यति ईश्वरो भवति । सिद्धमन्यत् । ऋभा.

[4]यः श्वेताँ अधिनिर्णिजश्चक्रे कृष्णाँ अनु व्रता ।
स धाम पूर्व्यं ममे यः स्कम्भेन वि रोदसी
अजो न द्यामधारयन्नभन्तामन्यके समे ॥

(१) ऋसं. ८।४१।४; ऐब्रा. २९।८।३.

(२) ऋसं. ८।४१।५.

(३) ऋसं. ८।४१।६.

(१) ऋसं. ८।४१।७.

(२) ऋसं. ८।४१।८.

(३) ऋसं. ८।४१।९.

(४) ऋसं. ८।४१।१०.

यः वरुणः निर्णिजः आत्मीयान् रश्मीन् दिवा श्वेतान् अधि चक्रे अधिकरोति तथा रात्रौ कृष्णान् चक्रे । सः वरुणः अनु व्रता कर्माणि लक्षीकृत्योभयविधकर्मानुगुण पूर्व्यं धाम अन्तरिक्ष दिवा मम निर्ममे । अपि च यः स्कम्भेन अन्तरिक्षेण अजो न यथा आदित्यः ता धारयति तथा रोदसी द्यावापृथिव्यौ वि अधारयत् विधारयति सः वरुण इत्यर्थः । सिद्धमन्यत् । ऋभा.

गुरुतम , पृथिवीकर्ता, सर्वभुवनाधिष्ठाता, अमृतगोप्ता, व्रतोबलरक्ष च वरुणः

**अस्तभ्नाद्द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।**
**आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥**

विश्ववेदाः विश्वधनः असुरः बलवान् वरुणः द्याम् अस्तभ्नात् । तथा पृथिव्याः च वरिमाण परिमाण अमिमीत चक्रे । एवं निर्मितानि विश्वा सर्वाणि भुवनानि सम्राट् भूत्वा आसीदत च अधितिष्ठच्च । वरुणस्य तानि एतानि व्रतानि कर्माणि विश्वेत् विश्वानीत्य । अतो वर्णितगुणतरत्वानीत्यर्थः । ऋभा.

**एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।**
**स नः शर्म त्रिवरूथं वि यंसत्पात नो द्यावापृथिवी उपस्थे ॥**

हे स्तोतः बृहन्तं महान्तं वरुणं एव एवं वन्दस्व स्तुहि । अमृतस्य गोपा गोपायितारं धीरं प्राज्ञं वरुणं नमस्य नमस्कुरु च । सः वरुणः नः अस्मभ्यं त्रिवरूथं त्रिभूमिकं शर्म गृहं वि यंसत् प्रयच्छतु । उपस्थे उपस्थाने वर्तमानान् नः अस्मान् द्यावापृथिवी द्यावापृथिव्यौ पात रक्षतम् । ऋभा.

(१) ऋसं. ८।४२।१. कासं. ३।६ (३६) असुरो (असुर), ऐब्रा. ५।८।२५; शाब्रा. ९।६; गोब्रा. २।४।१५.

(२) ऋसं. ८।४२।२; कासं. १७।१९ (१०७); मैसं. ४।१०।३ (८६), ऐब्रा. ५।८।२५; शाब्रा. ९।६; तैब्रा. २।५।८।४ पातं नो...... उपस्थे (यूयं पात स्वस्तिभिः सदा नः).

**इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।**
**ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥**

हे देव द्योतमान वरुण इमां धियं इदं कर्म शिक्षमाणस्य अनुतिष्ठतो मम क्रतुं प्रज्ञानं दक्षं बलं च सं शिशाधि तीक्ष्णीकुरु । यया नावा यज्ञरूपया विश्वा सर्वाणि दुरिता दुरितानि अति तरेम तां सुतर्माणं सुष्ठु तारयित्रीं यज्ञरूपां नावं अधि रुहेम वयमारुहेम । दुःखसागरतरणे हेतुत्वाद्यज्ञो नौरित्यत्र रूपकमिष्यते । ऋभा.

सर्वधर्माधिष्ठाता, सर्वापराधसाक्षी, स्थिरचरज्ञाता, सर्वगूढागूढचेष्टिद्रष्टा, कृत्स्नजगद्व्यापकः, जलनिलीनः, अनृतवक्तृनिग्राहकपाशधरः

**बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति ।**
**यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः ॥**

बृहन् महान् परिवृढो वा वरुणः एषां दूरमनां शत्रूणां अधिष्ठाता नियन्ता सन् ततः कृतं सर्वं अन्तिकादिव पश्यति सर्वमन्तिकादिव जानाति । न तस्य व्यवधायकं किञ्चिदस्तीत्यर्थः । यः वरुणः तायत् संततेन वर्तमानं स्थिरं मन्यते चरत् चरणशीलं नश्वरं च वस्तु मन्यते । स्थावरजङ्गमात्मकं सर्वं जगज्जानातीत्यर्थः । स बृहन् इति सम्बन्धः । इदमित्थं ज्ञानमद्भावं वरुणस्य उभयादर्शनं सर्वमिति । अपि च स्थिरं चरं नश्वरं स्थूलं सूक्ष्मं इत्येवमादि इदं सर्वं अभिगोपितज्ञानत्वात् देवाः विदुः जानन्ति । अभा.

**यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम् ।**
**द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः ॥**

पूर्वमन्त्रमृचि एषां इत्युक्तम् । तत्र इदमाह पुनः

(१) ऋसं. ८।४२।३, तैसं. १।२।२।२; कासं. २।३ (९) शिक्षमाणस्य (शिक्षमानस्य) वरुण (वर्ण) रुहेम (रुहेयम्), मैसं. १।२।२ (१५) रुहेम (रुहेयम्); ऐब्रा. ३।२।२५.

(२) असं. ४।१६।१. (३) असं. ४।१६।२.

सत्यवदनशीलः पुण्यकृत् तं अति सृजन्तु विमुञ्चन्तु । अमा.

अनन्तमहिमोपेतः, कपटजनभयङ्करः, अप्रमेयव्रतधर, अद्वितीयसर्वज्ञः

कथं महे असुरायाब्रवीरिह कथं पित्रे हरये त्वेषनृम्णः ।
पृश्निं वरुण दक्षिणां ददावान् पुनर्मघ त्वं मनसाचिकित्सीः
न कामेन पुनर्मघो भवामि सं चक्षे कं पृश्निमेतामुपाजे ।
केन नु त्वमथर्वन काव्येन केन जातेनासि जातवेदाः ॥
सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः ।
न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ॥
न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन् ।
त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ॥
त्वं ह्यङ्ग वरुण स्वधावन विश्वा वेत्थ जनिमा सुप्रणीते ।
किं रजस एना परो अन्यदस्त्येना किं परेणावरममुर ॥
एकं रजस एना परो अन्यदस्त्येना पर एकेन दुर्णशं चिदर्वाक् ।
तत् ते विद्वान् वरुण प्र ब्रवीम्यधोवचसः पणयो भवन्तु नीचैर्दासा उप सर्पन्तु भूमिम् ॥
त्वं ह्यङ्ग वरुण ब्रवीषि पुनर्मघेष्ववद्यानि भूरि ।
मो षु पणीँरभ्येतावतो भूत्मा त्वा वोचन्नराधसं जनासः ॥
मा मा वोचन्नराधसं जनासः पुनस्ते पृश्निं जरितर्ददामि ।
स्तोत्रं मे विश्वमा याहि शचीभिरन्तर्विश्वासु मानुषीषु दिक्षु ॥

(१) असं. ५।११।१-११.

आ ते स्तोत्राण्युद्यतानि यन्त्वन्तर्विश्वासु मानुषीषु दिक्षु ।
देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखासि
समा नौ बन्धुर्वरुण समा जा वेदाहं तद्यन्नावेषा समा जा
ददामि तद्यत् ते अदत्तो अस्मि युज्यस्ते सप्तपदः सखास्मि ॥
देवो देवाय गृणते वयोधा विप्रो विप्राय स्तुवते सुमेधाः
अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं देवबन्धुम् ।
तस्मा उ राधः कृणुहि सुप्रशस्तं सखा नो असि परमं च बन्धुः ॥

## विष्णुः

रक्षकः, एक एव त्रिभिः पदैः त्रिलोकव्यापी, अनभिभवनीयः, धर्माधारः, चिन्तनीयगीतःसार्वार्थकर्मनामजन्मरूपः, लोकत्रयस्य एक एव स्रष्टा धारकश्च, सूरीणां दर्शनस्तवनविषयपरमपदः, मधुपूर्णाक्षीयमाणत्रिपदः, मर्त्यदृश्यपदद्वयः, अप्रमेयतृतीयपदः, भक्तभोग्यमधुनिष्यन्दिपरमपदः, नित्यतरुणः, अतिवृद्धः, अहिंसकः, स्वर्द्रष्टा, चक्रप्रवर्तकः, आकाशरीरः, अनन्तमहिमगूढाङ्गरूपः, सर्वाहितबुद्धिदः, मनुष्येभ्यो वासार्थं पृथिवीप्रदः

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे
पृथिव्याः सप्त धामभिः ॥

विष्णुः परमेश्वरः सप्त धामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैः यतः पृथिव्याः यस्माद्भूप्रदेशात् विचक्रमे विविधं पादक्रमणं कृतवान्, अतः अस्मात् पृथिवीप्रदेशात् नः अस्मान् देवाः अवन्तु; विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैर्जयं तैत्तिरीया

(१) ऋसं. १।२२।१६; सासं. २।१०।२ सप्त धामभिः (अधि सानवि)

आमनन्ति — 'विष्णुमुखा वै देवाश्छन्दोभिरिमाल्लोकाननपजय्यमभ्यजयन्' (तैसं. ५।२।१।१) इति। विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्युपादानम्। पृथिवीप्रदेशादारभ्य नाम भूलोके वर्तमानानां पापनिवारणम्। ऋमा.

[1]**इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।**
**समूळ्हमस्य पांसुरे ॥**

विष्णुः त्रिविक्रमावतारधारी ... प्रतीयमानं सर्वं जगदुद्दिश्य वि चक्रमे विशेषेण क्रमणं कृतवान्। तदा त्रेधा त्रिभिः प्रकारैः पदं नि दधे स्वकीयं पादं प्रक्षिप्तवान्। अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने समूळ्हं ... सर्वं जगत् सम्यगन्तर्भूतम्। समूळ्हं यास्केनैव व्याख्यातम्—'विष्णुर्विशतेर्वा व्यश्नोतेर्वा। यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूळ्हमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् पांसुर इव पदं न दृश्यत इति। पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा' (नि. १२।१८,१९) इति। ऋमा.

[2]**त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः।**
**अतो धर्माणि धारयन् ॥**

अदाभ्यः केनापि हिंसितुमशक्यः गोपाः सर्वस्य जगतः रक्षकः विष्णुः पृथिव्यादिस्थानेषु अतः एतेषु त्रीणि पदानि वि चक्रमे। किं कुर्वन्। धर्माणि अग्निहोत्रादीनि धारयन् पोषयन्। ऋमा.

(१) ऋसं. १।२२।१७, असं. ७।२७।४ पदम् (पदा), सासं. १।२।११, २।१८।२ पांसुरे (पांसुले); तैसं. १।२।१३।१; कासं. २।१० (५३); मैसं. १।२।९ (६३), ४।१।१२ (७४) पदम् (पदा); शुसं. ५।१५ पांसुरे+(स्वाहा), ऐब्रा. ३।६।६, ४।८।९; ताब्रा. २०।३।२; पब्रा. १।६।८, तैब्रा. १।४।३ ६, २।७।१४।२, ३।१।३।३; शब्रा. ३।५।३।१३, १२।४।१।४, ५; नि. १२।१९.

(२) ऋसं. १।२२।१८; असं. ७।२७।५ अतो (इतो); सासं. २।१८।२. शुसं. ३४।४३; ऐब्रा. ४।८।९; तैब्रा. २।४।६।१ अतो (ततो).

[1]**विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।**
**इन्द्रस्य युज्यः सखा ॥**

हे ऋत्विगादयः विष्णोः कर्माणि पालनादीनि पश्यत। यतः यैः कर्मभिः व्रतानि अग्निहोत्रादीनि पस्पशे सर्वो यजमानः स्पृशति विष्णोरनुग्रहात् अनुतिष्ठति इत्यर्थः। तादृशो विष्णुः इन्द्रस्य युज्यः योग्यः अनुकूलः सखा भवति। विष्णोः इन्द्रानुकूल्यं 'अग्नाविष्णू' इत्यनुवाके 'अथ वै तर्हि विष्णुः' (मैसं. ?।४।१२।२) इत्यस्मिन् प्रश्ने ... आमनन्ति। ऋमा.

[2]**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।**
**दिवीव चक्षुराततम् ॥**

सूरयः विद्वांसः ऋत्विगादयः विष्णोः सर्वान्ध परमं उत्कृष्टं तत् शास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा पश्यन्ति। तत्र दृष्टान्तः। दिवीव। आकाशे यथा आततं सर्वतः प्रसृतं चक्षुः निरोधाभावेन विशदं पश्यति तद्वत्। ऋमा.

[3]**तद्विप्रासो विपन्यवो जागृवांसः समिन्धते।**
**विष्णोर्यत्परमं पदम् ॥**

पूर्वोक्तं विष्णोः यत् परमं पदं अस्ति तत् पदं विप्रासः मेधाविनः समिन्धते सम्यक् दीपयन्ति। कीदृशाः। विपन्यवः विशेषेण स्तोतारः जागृवांसः जागरणशीलाः प्रमादराहित्येन जागरूकाः। ऋमा.

[4]**विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि।**

(१) ऋसं. १।२२।१९; असं. ७।२७।६; सासं. २।१८।२, तैसं. १।३।६।२; कासं. ३।३ (१४), १६।१६ (२०४); मैसं. १।२।१४ (९७), ३।९।३ (३); शुसं. ६।४, १३।३३; शब्रा. ३।७।१।१७, ७।५।१।२५.

(२) ऋसं. १।२२।२०; असं. ७।२७।७; सासं. २।१८।२; तैसं. १।३।६।२, ४।२।१।३; कासं. ३।३ (१६), २६।५ (१५); मैसं. १।२।१४ (९९) सदा (शच्या); ३।९।४ (४); शुसं. ६।५, शब्रा. ३।७।१।१८.

(३) ऋसं. १।२२।२१, सासं. २।१८।२; शुसं. ३४।४४.

(४) ऋसं. १।१५४।१; असं. ७।२७।१ वीर्याणि प्र वोचं (प्र वोचं वीर्याणि), तैसं. १।२।१३।३; कासं. २।१० (५७); मैसं. १।२।९ (६९), ३।८।७ (१९); शुसं. ५।१८ यायः+ (विष्णवे त्वा); शब्रा. ३।५।३।२१ शुसंवत्.

**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरु-
गायः ॥**

हे नराः विष्णोः व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु कं अतिशीघ्रं प्र वोचं प्रब्रवीमि । अत्र यद्यपि नु कं इति पदद्वयं, तथापि यास्केन 'नवोत्तराणि पदानि' ( नि. ३।१३ ) इत्युक्तत्वात्, शाखान्तरे एकत्वेन पाठाच्च नु इत्येतदिवार्थे नु कं इति पदद्वयम् । कानि तानीति तत्राह । यः विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः । तथा च मन्त्रान्तरम्—'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' (ऋसं. १।१०८।९) इति । तैत्तिरीयेऽपि —'योऽस्यां पृथिव्यामस्यायुषा' इत्युपक्रम्य 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' ( तैसं. १।२।१२।१ ) इति । तस्मात् लोकत्रयस्य पृथिवीशब्दवाच्यत्वम् । किंच यः च विष्णुः उत्तरं उद्गततरमतिविस्तीर्णं सधस्थं सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षं अस्कभायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः । अनेन अन्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति । यद्वा । यो विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान् । रजःशब्दो लोकवाची, 'लोका रजांस्युच्यन्ते' इति यास्केनोक्तत्वात् । किंच यश्चोत्तरं उद्गततरं उपरिभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकं अस्कभायत् स्तम्भितवान् सृष्टवानित्यर्थः । अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे । भूरादिलोकत्रयमित्यर्थः । भूम्यां उपार्जितकर्मभोगार्थत्वात् इतरलोकानां तत्कारणत्वम् । किंच यश्चोत्तरं उद्गततरं सर्वेषां लोकानामुपरिगतम् । अपुनरावृत्तेः तस्योत्कृष्टत्वम् । सधस्थं उपासकानां सहस्थानं सत्यलोकमस्कभायत् स्तम्भितवान् ध्रुवं स्थापितवान् इत्यर्थः । किं कुर्वन् । त्रेधा विचक्रमाणः त्रिप्रकारं सृष्टान् लोकान् विक्रममाणः । विष्णोस्त्रेधा क्रमणं 'इदं विष्णुर्वि चक्रमे' ( ऋसं. १।२२।१७ ) इत्यादिश्रुतिषु प्रसिद्धम् । अत एव उरुगायः उरुभिः महद्भिः गीयमानः अतिप्रभूतं गीयमानो वा । य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम् । ऋभा.

**प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो
गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि
विश्वा ॥**

यस्येति वक्ष्यमाणत्वात् स इति अवगम्यते । स महानुभावः वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते स्तूयते सर्वैः । वीर्येण स्तूयमानत्वे दृष्टान्तः । मृगो न सिंहादिरिव । यथा स्वविरोधिनो मृगयिता सिंहः भीमः भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते । अभिमतार्थे निरुक्तम्—'मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव । कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति वा । गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा' ( नि. १।२० ) इति । तद्द्वयमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्यपादानभूतः । परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते' ( तैउ. २।८ ) इत्यादिश्रुतिषु प्रसिद्धा । किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये संचारी वा तथा गिरिष्ठाः गिरिवत् उच्छ्रितलोकस्थायी । यद्वा । गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः । ईदृशोऽयं स्वमहिम्ना स्तूयते । किंच यस्य विष्णोः उरुषु विस्तीर्णेषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति आश्रित्य निवसन्ति स विष्णुः स्तूयते । ऋभा.

**प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय
वृष्णे ।**

(१) ऋसं. १।१५४।२; अस. ७।२६।२, ३ तद्विष्णुः स्तवते वीर्येण ( तद्विष्णु स्तवते वीर्याणि ) गिरिष्ठाः+ ( परावत आ जगम्यात् परस्याः ); कासं २।१० ( ५९ ); मैसं. १।२।९ ( ७१ ); शुसं. ५।२० तद्विष्णुः ( तद्विष्णु ); तैब्रा. २।४।३।४; शब्रा. ३।५।३।२३ शुसंवत्.

(२) ऋसं. १।१५४।३.

य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥

विष्णवे सर्वव्यापकाय शूष अस्म कृत्यादिजन्य बल महत्त्व मन्म मनन स्तोत्र मननीय शूषं बलं वा विष्णु एतु प्राप्नोतु । कीदृशाय । गिरिक्षित वाचि गिरिवदुन्नत प्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम् । एव महानुभावं शूष प्राप्नोतु । कोऽस्य विशेष इति उच्यते । यः विष्णुः इद प्रसिद्ध दृश्यमान दीर्घ अतिविस्तृत प्रयत नियत सधस्थ सह स्थान लोकत्रय एकः इत एव एवाद्वितीयः सन त्रिभिः पदेभिः पादैः विममे विशेषेण निर्मितवान । ऋसा.

यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।

य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥

यस्य विष्णोः मधुना माधुर्येण दिव्येनामृतेन पूर्णा पूर्णानि (त्री) त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् । य उ य एव पृथिवी प्रख्याता भूमिं द्या उत द्योतनात्मकमन्तरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दशलोकाश्च । यद्वा । पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि । द्युशब्देन तदन्तान्तराणि भूरादिसप्तभुवनानि । एवं चतुर्दशलोकान् विश्वा भुवनानि सर्वाण्यपि तत्रस्थानि भूतजातानि । त्रिधातु । त्रयाणां धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्ट यथा भवति तथा दाधार धृतवान उत्पादितवानित्यर्थः । छन्दोगारण्यके—'तत्तेजोऽसृजत । तदपोऽसृजत , ता आप ऐक्षन्त ।' इति भूतत्रयसृष्टिमुक्त्वा 'हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ' ( छाउ. ६।३।२–३ ) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु काल त्रयं गुणत्रयं वा दाधारेत्यन्वयः । ऋसा.

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।

उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥

अस्य महतो विष्णोः प्रियं प्रियभूतं तत् सर्वैः सेव्यत्वेन प्रसिद्ध पाथः, अन्तरिक्षनामैतत् । पाथोऽन्तरिक्षं पथा व्याख्यातम् ' (नि. ६।७) इति यास्केनोक्तत्वात् । अभिलक्ष्य ब्रह्मलोकमित्यर्थः । अश्यां व्याप्नुयाम् । तमेव विशेषयति । यत्र स्थाने देवयवः देवं द्योतमानमात्मानं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः नरः मदन्ति तृप्तिमनुभवन्ति । तदश्यामित्यन्वयः । पुनरपि तदेव विशेषयति । उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना अवस्थितस्य विष्णोः व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे नि[illegible] मधुनः पदे स्थाने मध्वः मधुरस्य उत्सः निष्यन्दो वर्तते । तदश्याम् । यत्र भुक्तानामजामरणपुनरावृत्त्यादि[illegible] नास्ति सर्वदा परमानन्देन अमृतरूपा दिव्यभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिक नास्तीत्यर्थः । इत्था इत्थमुक्तप्रकारेण स हि बन्धुः स खलु सर्वदा मुक्तिना बन्धुभूतो विष्णुः तत्पदं प्राप्तवतां न पुनरावृत्तिः । 'न च पुनरावर्तते ' इति श्रुतेस्तत्पदं बन्धुपदम् । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ।

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥

हे पत्नीयजमानौ वा युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोः गमनाय उश्मसि कामयामहे । तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्तं कानीत्याह । यत्र येषु वास्तुषु गावः रश्मयः भूरिशृङ्गाः अत्यन्तोन्नत्युपेताः बहुभिराश्रयणीया वा अयासः अयना गन्तारो [illegible] अतिस्फुताः । यद्वा । गावो गन्तारः, अयासः, अवस्थाप्रकाशायुक्ता इत्यर्थः । अत्राह अत्र खलु तत्तदा[illegible] उरुगायस्य बहुभिर्गीयमानस्य [illegible] वृष्णः कामानां वर्षितुर्विष्णोस्तत्तादृशं सर्वत्र पुराणादिषु गन्त

(१) ऋसं. १।१५४।४.

(२) ऋसं. १।१५४।५. मैसं. ४।१२।१ ( २२ ) मध्व ( मध्वा ); ऐब्रा. ३।६।६; तैब्रा. २।४।६।२.

(१) ऋसं. १।१५४।६ कासं. ३ ३ वृष्णः ( विष्णो ) नि. २।७।१.

[१]परो मात्रया तन्वा वृधान न ते महित्वमन्व श्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥

पर इति सकारान्तं परस्तादित्यस्यार्थे। मात्रेति छान्दसं रूपं येन तृतीया। मात्रया परः परस्ताद्वर्तमानयाऽपरिमितया तन्वा शरीरेण वृधान वर्धमान हे विष्णो ते तव महित्व महत्त्वं न अन्वश्नुवन्ति नानुव्याप्नुवन्ति। त्रीन् विक्रममाणस्य यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः। ते तव उभे रजसी उभौ लोकौ पृथिव्याः आरभ्य पृथिवीमन्तरिक्षं च विद्मः जानीमः यत् चक्षुषोपलभामहे नान्यत्। देव द्योतमान विष्णो त्वमेव परमस्य स्वर्गादेः ऊर्ध्व लोकस्य परमं लोकं वित्से जानासि। अस्मास्वन्यः न कश्चिदपि व्याप्तुं शक्नोतीति भावः। ऋभा.

[२]न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥

हे देव दानादिगुणयुक्त विष्णो ते तव महिम्नः महत्त्वस्य परं विप्रकृष्टं अन्तं अवसानं जायमानः प्रादुर्भवज्जनः न आप न प्राप्नोति। तथा जातः प्रादुर्भूतोऽपि जनः न एव प्राप्नोति। तव महत्त्वस्यावसानं नास्ति। अत एव सर्वैर्न ज्ञायते इति भावः। योऽसौ महिमा तमाह। ऋष्वं दर्शनीयं बृहन्तं महान्तं नाकं द्युलोकं उदस्तभ्नाः त्वम् उदधारयः। यथाऽधो न पतति तथा। पृथिव्याः भूमेः सम्बन्धिनीं प्राचीं ककुभं च दाधर्थ धारितवानसि। उपलक्षणमेतत् सर्वस्य भूतजातस्य। तथा च मन्त्रान्तरे– 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' (ऋसं. १।१५४।४) इति। ऋभा.

[३]इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥

हे द्यावापृथिव्यौ मनुषे स्तोत्रे मनुष्याय दशस्या दित्सया युक्ते युवां इरावती अन्नवत्यौ धेनुमती गोमत्यौ सूयवसिनी शोभनयवसे च भूत अभूतम्। हि इति पूरणः। विष्णुना निर्मिते ... एवमे ... पूर्वमभवतामित्यर्थः। हे विष्णो एते इमे रोदसी द्यावापृथिव्यौ व्यस्तभ्नाः विविधमधारयः। पृथिवीम् अभितः सर्वतो मयूखैः ... विविधं बधम। अपि च पृथिवीं ... अभितः सर्वतः स्थितैः मयूखैः पर्वतैः दाधर्थ धारितवानसि। यथा न चलति तथा दृढीकृतवानसीत्यर्थः। पर्वता हि विष्णोः स्वभूताः। 'विष्णुः पर्वतानामधिपतिः' (तैसं. ३।४।५।१) इति श्रुतेः। ऋभा.

[१]नू मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् ।
प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥

सः मर्तः मनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्रं दयते धनमादत्ते। यः मनुष्यः उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात्। यः च सत्राचा सहाञ्चता मनसा मननेन स्तोत्रेण प्र यजाते प्रकर्षेण पूजयेत्। एतावन्तम् एतावत्परिमाणं महान्तं नर्यं नरेभ्यो हितं विष्णुं आविवासात् नमस्कारादिभिः परिचरेत्। स मर्तो दयत इत्यन्वयः। यद्वा। स मर्तः सनिष्यन् धनादीनि लप्स्यमानो भवत्येव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम्। ऋभा.

[२]त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ।

(१) ऋसं. ७।९९।१; मैसं. ४।१४।५ (६०); तैब्रा. २।८।३।२ तन्वा (तनुवा). (२) ऋसं. ७।९९।२.

(३) ऋसं. ७।९९।३. तैसं. १।२।१३।२ मनुषे दशस्या। व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ (मनवे यशस्ये। व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार) मैसं. १।२।९ (६४) मनुषे दशस्या (मनवे यशस्ये) व्यस्तभ्ना (व्यस्कभ्ना) विष्णवेते (विष्ण एते), शुसं ५।१६ मनुषे (मनवे) व्यस्तभ्ना (व्यस्कभ्ना) मयूखैः+ (स्वाहा); शब्रा. ३।५।३।१८ शुसंवत्.

(१) ऋसं. ७।१००।१; तैब्रा. २।४।३।४; गोब्रा. २।४।१७.

(२) ऋसं. ७।१००।२.

प्रथम शिपिविष्टोऽस्मि इति। अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितस्तेजसाऽऽच्छादितो भवामीति। तद्-शीलोऽहं नाम न प्रशस्तमित्यर्थः। तन्नाम ते परिचक्ष्य वर्जनीय परिहरन्तम्। विरुद्धार्थप्रतिपादक-मेतत् नाम परिचक्ष्य इति तत्। शिव समान प्रथम। अत उक्तं परिलक्षण यो णामरूपमस्ति एतत् यः स्म अस्मात् अस्मात् मा अप गूहः अपगतं मा कुरु। अपि तत्। स्म प्रख्यापय। नामरूप रूपं गान मा प्रसक्तिर्इति। तेन। अत इस्मात् अरूपः रूपान्तरमेव धत्त्वन् नामिथ समागो वणथ अस्मात् मनागो गर्भिम नस्मादिदं गम्न न कार्यमिति। प्रशस्तपक्ष तु हे विष्णो त तव तन्नाम इति परिचक्ष्य स्मरामि प्रख्यापनीय मन्यते। न प्रख्यापनीयम्। इति तन्नाम। शिपिविष्टो रश्मिभिराविष्टोऽस्मीति तन्नाम प्रथय। तत एव प्रख्यातनाम अस्मात्स्मात्तेनप्रख्यात रूप मधुना मा अपगूहः। इदानीं गर्भ्योऽसि तत अस्मात् च समिधे समागे अपः स्वरूपं यज्ञगाणि सम सौरीशिल्ल तामस्य धर्म एवमथ म मिति तस्मात् पृष्टोऽपि जातम् मतमिति। तर्हि तत तस्य वक्तव्यम्। अतो वर्त्तते तदिदं रूपम् इत्यादि मन्त्राः।

सभा.

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्। वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥

हे विष्णो ते तुभ्यं आसः आस्यात् आ अभिमुख वषट् कृणोमि करोमि। वषट्कारेण विसर्जयामि। हे शिपिविष्ट, शिपयो रश्मयः, तैराविष्ट विष्णो तत् वषट्कृत मे मदीयं हव्यं जुषस्व सेवस्व। सुष्टुतयः शोभनस्तुतिमत्यः गिरः वाचश्च त्वां वर्धन्तु वर्धयन्तु। नः अस्मान् यूयं सर्वदा स्वस्तिभिः अविनाशिभिर्मङ्गलैः सदा पात रक्षत।

ऋभा.

देवयजनशीलमानवैश्च कर्तव्या विष्णवात्मबुद्धिः

अथ विष्णुक्रमान् क्रमते। एतद्वै देवा विष्णुभूत्वेमाँल्लोकानक्रमन्त। यद्विष्णुर्भूत्वाऽक्रमन्त, तस्माद्विष्णुक्रमाः। तथैवैतद्यजमानो विष्णुर्भूत्वेमाँल्लोकान् क्रमते॥

अथ विष्णुक्रमक्रमणं विधातुं तन्निर्वचनद्वारेण प्रशंसति— अथ विष्णुक्रमानिति। विष्णुर्देवः क्रान्तवान् विष्णुक्रम इति नाम सम्पन्नम्। तथा यजमानस्य एतत एतेन समन्त्रपादाक्रमणेन इमान् लोकान् विष्णुर्भूत्वा क्रान्तवान् भवति यजमानः।

शब्रामा.

## भावना

स्थिरचरात्मा

[1]चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च।

देवानां दीप्यमानानां रश्मीनां समूहः। उदगात् उदयं प्राप्तम्। चित्रं आश्चर्यकरं ... उदगात् उदयाचलं प्राप्तमासीत्। मित्रस्य ... चक्षुः प्रकाशकं ... वा। उदयं प्राप्य च द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च आप्राः। स्वतेजसा आ समन्तात् अपूरयत्। ईदृगमलमण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा स्वरूपभूतः। ... सर्वस्य ... कारणम्। कारणाच्च कार्यं न भिद्यते। तथा च पारमर्षं सूत्रम्— 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्रसू. २।१।१४) इति। ... स्थावरजङ्गमात्मकस्य सर्वस्य

(१) ऋसं. १।११५।१. असं. १३।२।३५, २०।१०७।१४ आप्रा (आप्राद्) सासं. १।६।२ तैसं. १।४।४३।१, २।४।१४।४, कासं. ४।९ (८७), २२।९ (१०), मैसं. १।३।३७ (४०१), शुसं. ७।४२ पत्र+(स्वाहा), ऐब्रा. १७।४।११, तैब्रा. २।८।७।३; शब्रा. ४।३।४।१०, ७।५।२।२७, गुआ. ३।२।३।१०; तैआ. १।७।६, २।१३।१; नि. १२।१६।१.

(१) ऋसं. ७।१००।७. सासं. २।९७११; तैसं. २।२।१२।४. कासं. ६।१० (४०) विष्णवास (विष्ण आस).

(२) शब्रा. ६।७।२।१०.

प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते। तथा च श्रूयते—'योऽसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति' (तैआ. १।१४।१) इति। ऋभा.

देवैरपि अबाध्यव्रतः

[1]न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः।
नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः॥

यस्य सवितुर्देवस्य व्रतं प्रसवाख्यं कर्म इन्द्रः न मिनाति न हिनस्ति। वरुणः च न मिनाति। मित्रः च अर्यमा च न मिनाति। रुद्रः च न मिनाति। अरातयः असुराश्च न मिनन्ति। मिनातीति (मिनन्तीति) श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते। तं सवितारं सर्वस्य प्रेरकं देवं द्योतमानं इदं इदानीं नमोभिः अन्नैः पुरोडाशादिभिः सह। 'नमः आयुः' (नि. २।७।२१) इत्यन्ननामसु पाठात्। स्वस्ति क्षेमाय हुवे स्तौमि। ऋभा.

विश्वरूपः, प्रजानां जनकः, भुवनपतिः

[2]देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम्॥

सविता अन्तर्यामितया सर्वस्य प्रेरकः विश्वरूपः नानाविधरूपः त्वष्टा त्वष्टृनामकः देवः प्रजाः पुरुधा बहुधा जजान जनयति। ताश्च पुपोष पोषयति। इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि च अस्य त्वष्टुः संबन्धीनि। तदिदं देवानां एकं मुख्यं असुरत्वम्। अस्यति क्षिपति सर्वानित्यसुरः प्रबलः, तस्य भावः असुरत्वं प्राबल्यम्। महदैश्वर्यम्। ऋभा.

स्थिरः, सर्वेषां धर्ता, संवत्सररूपः, प्रजाजनकः

[3]पदंभारौ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः।
तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका॥

अचरन् स्थायी एकः संवत्सरः पट् पट्संख्याकान् भारान्, बिभर्ति पुष्पफलिकामादि येभिर्ते भारा ऋतवः तान् वसन्तादीन् बिभर्ति अवयवत्वेन धारयति। तथा ऋतं सत्यभूतं वर्षिष्ठं वृद्धतममादित्यमात्मा तमेव संवत्सरं गावः रश्मयः उप आगुः प्राप्नुवन्ति। किंच तस्मिन्नेव संवत्सरे अत्याः अतनशीलाः आगमापायधर्मोपेताः तिस्रो महीः महान्तो लोकाः उपराः उपर्युपरि वर्तमानाः तस्थुः तिष्ठन्ति। लोकत्रयमेव दर्शयति। गुहा गहने स्थाने निहिते द्वे द्यौश्चान्तरिक्षं चेत्येते निहिते न दृश्येते। एका भूमिः अपि सर्वभूताधारतया दृश्यते। ऋभा.

[4]त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान्।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम्॥

त्रिपाजस्यः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्ऋतुभिः पाजस्यमुदरं यस्य सः त्रिपाजस्यः। त्र्युदर इत्यर्थः। उदरवचनश्च पाजस्यशब्दः। 'इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्' (शुय. २५।८) इति अश्वमेधमन्त्रे उदरपर्यायाम्नानात्, पाजसि बलं मात्यस्मिन्निति व्युत्पत्तेश्च सर्वेषामङ्गानां मध्ये उदरस्य बलवत्त्वात्। वृषभः स्वावयवभूतवर्षर्तौ अपां वर्षकः। विश्वरूपः उत्पद्यमानपुष्पफलादिभिर्विचित्ररूपः। उत अपि च त्र्युधा, वसन्तशरद्धेमन्ताख्यैस्त्रिभिर्ऋतुभिरूधोभिः त्र्युधा। प्रजावान्। प्रकर्षेण जायन्त इति व्रीह्यादयः प्रजाः। पुरुध नानाप्रकारेण विद्यमानव्रीहियवादिरूपप्रजावान्। किंच त्र्यनीकः त्रिभिःप्रावृड्वर्षशीताख्यैः अनीकैः गणरूपैः माहिनावान् महत्त्ववान् संवत्सराभिमानी देवः पत्यते आगच्छति। वृषभः सेचनसमर्थः सः संवत्सरः शश्वतीनां बह्वीनां ओषधीनां पुष्पफलादिसंपत्तये रेतोधाः रेतसः उदकस्य धर्ता भवति।

ऋभा.

(१) ऋसं. २।३८।९.
(२) ऋसं. ३।५५।१९, नि. १०।३४.
(३) ऋसं. ३।५६।२.
(४) ऋसं. ३।५६।३.

